# तन्त्ररत्नम्

## श्रीपार्थसारथिमिश्रविरचितम् ।

महामहोपाध्याय पण्डित श्रीगङ्गानाथ झा
शर्म्मणा संशोधितम् ।

THE

# TANTRARATNAM

By

PÂRTHASÂRATHI MIS'RA

*EDITED BY*

MAHAMAHOPADHYAYA GANGA NATHA JHA,
M. A, D LITT
Vice-Chancellor, Allahabad University,
ALLAHABAD.

1930.

# PREFATORY NOTE

It is well-known to all who are interested in Mimamsa literature that the work of Kumarila available to us is in three parts, the last of which going by the name of Tuptika deals with Chapters IV–XII of the Sutras This work is more in the way of brief notes than a commentary. In view of this fact Parthasarathi Mis'ra wrote an extensive commentary on this short work, called the Tantraratna This work is a voluminous commentary, not only on Kumarila's work but also on the original Bhasya A study of the Tantraratna is essential for every student of Mimamsa It has therefore been *thought advisable to bring out an edition of the* work in the 'Sarasvati Bhavana Sanskrit Texts' Series The work of editing was made over to me, and with the willing assistance of my colleague in the University, P Umes'a Mis'ra, I have been able to see through the press a portion of it My failing health however renders me unable to carry on the work any longer I trust however that the Principal of the Benares Sanskrit College will be able to find a more willing and more energetic editor from among the staff of the college

The manuscripts used by me are the following —

(1) An old and generally correct manuscript belonging to the Sanskrit College Library

(2) A newer and less correct manuscript belonging to the same Library.

(3) A manuscript fairly correct in my own library, which had been given to me by my old honoured tutor, the late Mahamahopadhyaya Pt Chitradhara Mis'ra, to whose memory I dedicate this work

THE UNIVERSITY, ALLAHABAD } *Ganganatha Jha*

श्रीः

# प्रस्तावना

श्रीमता भट्टपादेन कुमारिलेन मीमांसादर्शने प्रथमाध्यायाद्यपादे श्लोकवार्तिकं ततस्तृतीयाध्यायान्तं तन्त्रवार्तिकं तदनन्तरं द्वादशाध्यायपर्यन्तं टुप्टीकाभिधमिति ग्रन्थरत्नत्रयं जग्रन्थे । तत्रान्त्यो ग्रन्थष्टिप्पणीरूपोऽतीवसङ्क्षिप्ततया व्याख्यासापेक्ष इति शास्त्रदीपिकाकारः पार्थसारथिमिश्रस्तद्व्याख्याव्याजेन तन्त्ररत्ननामकं ग्रन्थं रचयामास । अस्य ग्रन्थस्य मुद्रणे कृतोत्साहोऽपि संस्कृतसाहित्योद्धरणधुरीणो मन्मित्रप्रवरो गोविंददासगुप्तमहाशयस्तत्सम्पादनमकृत्वैवास्मान् परित्यज्य दिवङ्गतः। स एवायं ग्रन्थ आदर्शचतुष्टयसाहाय्येन परिष्कृत्य प्रकाशयितुं प्रस्तूयते ।

अत्र सूचितं टुप्टीकापृष्ठादिकं 'बनारस—संस्कृत-सीरीज़' पुस्तकानुसारि—शबरभाष्यपृष्ठादिकं च 'एशियाटिक् सोसाइटी' पुस्तकानुसारीत्यवधेयम् ।

इति

प्रयागस्थः
२२।१०।२७

गङ्गानाथझा शर्म्मा

श्रीः

पार्थसारथिमिश्रविरचिते

# तन्त्ररत्ने

## चतुर्थोऽध्यायः

तत्र प्रथमः पादः ।

१-प्रतिज्ञाधिकरणम् ।

अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ॥ १ ॥

पूर्वाध्याये शेषपर्यायमेदमर्थ्यमेव चिन्तितम् । इहापि क्रतुपुरुषै- दमर्थ्यमेव चिन्त्यत इति न लक्षणे भेदः स्यादत आह(१)'तृतीये- नाध्यायेनावधृतशेषत्वे कः क्रत्वर्थः कः पुरुषार्थ इति' । चिन्त्यत इति संबन्धः । एतदेव विवृणोति-'विशेषश्चिन्त्यते पूर्वमवधृते सामान्ये । यथा सप्तमेन सामान्यातिदेशे सिद्धेऽष्टमेन विशेषातिदेशश्चिन्त्यत'(२) एवमिहापि सामान्यविशेषविषयत्वेन 'लक्षणभेदः'(३) ।

तदिदमेकदेशिमतं निराकरोति-'अथ वेति'(४) । पूर्वव्या- वृत्तावथ-वा-शब्दः । न हि सामान्यविशेषभेदेन लक्षणभेदः सम्भवति, पूर्वत्रापि विशेषविचारात् । कर्मण्यपि जैमिनिः

(१-४) टुप्टी० पृ०१

फलार्थत्वादिति(१) पुरुषार्थत्वमुक्तम्, असंयुक्तं प्रकरणात्(२) इत्यादिना च क्रत्वर्थत्वम्। न हि लिङ्गप्रकरणक्रमसमाख्यानैः पुरुषार्थत्वमविशेषितं चैदमर्थं गम्यते, किं तु क्रत्वर्थत्वमेव। तस्मान्नैवं लक्षणभेदः। कथं तर्हि इत्याह-'अथ समवैषम्य'मित्युपक्रमस्य। 'प्रयोजकाप्रयोजकत्वं' यद् वक्ष्यते तदेवास्मिन् लक्षणे 'ऽसाधारणं' लक्षणांतराविषयभूतं चिंत्यते। क्रत्वर्थपुरुषार्थविचारस्तु तार्तीय एव सन्निह प्रयुक्तिविवेकार्थः क्रियते। तथा फलविध्यर्थवादादिविचारोऽपि। यथोक्तम्—

फलविध्यर्थवादत्वकालार्थाङ्गप्रधानता।

फलक्रतुप्रयुक्तत्वविचाराय विचार्यत इति॥

'भाष्यकारश्चेदमेव' प्रयोजकाप्रयोजकत्वं लक्षणार्थम् 'अभिप्रेत्याह'-अतिक्रान्तस्तृतीयविषय इति'(३)। यदि हि क्रत्वर्थपुरुषार्थविचारं गोदोहनादौ कृतं भाष्यकारो लक्षणार्थमभ्स्यत ततो नैव तृतीयविषय इत्यवक्ष्यत। तथा 'पञ्चमे चासाधारण्येनैव'(४) यस्मात्प्रयोजकाप्रयोजकत्वमसाधारणं तस्मादेवं व्यपदेक्ष्यते 'प्रयोजकाप्रयोजकलक्षणं वृत्तमिति'(५) इतरथा हि क्रत्वर्थपुरुषार्थलक्षणं वृत्तमिति व्यपादेक्ष्यत। तस्मादेदमर्थलक्षणं पूर्वम्, इदं तु प्रयोजकाप्रयोजकलक्षणमिति लक्षणभेदः।

शेषशेषित्वाधीनत्वाच्च प्रयुक्तेस्तदनन्तरमारम्भः। यद्यपि न

(१) मी०सू०३।१।४ (२) मी०सू०३।३।११

(३) शावर४।१।२१; टुप्टी०१. (४) टुप्टी०१.

(५) शावर५।१।१.

सर्वे शेषिणः शेषाणां प्रयोजकाः, तुषोपवापवत्कपालस्य, तथापि शेषिण एव तावच्छेषाणामेव प्रयोजका नान्य इति भवति शेषलक्षणस्य प्रयुक्तिलक्षणं प्रति हेतुता।

ननु विधिरेवं सर्वेषां प्रयोजकः किमत्र चिंत्यते।

सत्यं विधिः प्रयोजकः। स तु किमर्थं प्रयोजयति। किं चातुर्मास्यविधिरामिक्षार्थमेव दध्यानयनं प्रयुङ्क्ते किं वा वाजिनार्थमपि। यदर्थं च यदनुष्ठाप्यते तत्तस्य प्रयोजकमिति व्यवह्रियते। आमिक्षा प्रयोजिका न वाजिनमिति। तस्माद्युक्ता चिंता।

कः पुनः सूत्रार्थः स उच्यते। प्रयुक्तिचिंता हि प्रकारभेदेन करिष्यते। क्वचित्क्रत्वर्थपुरुषार्थविचारद्वारेण, क्वचित्साक्षात्, क्वचित्फलविध्यर्थवादादिविचारद्वारेण। तदनेन विशेषप्रतिज्ञाद्वारेण सामान्यप्रतिज्ञानमेव क्रियते। यथा बाधाभ्युचयं चिंतयिष्याम इतीयत्ता चिंता प्रतिज्ञातेति।

ननु नानेन विशेषप्रतिज्ञाद्वारेण सामान्य प्रतिज्ञानमेव क्रियते येन विशेषाः सर्वे न प्रतिज्ञायते क्रत्वर्थपुरुषार्थमात्रप्रतिज्ञानात्।

परिहृतमेतद्भाष्यकारेणैव। अङ्गं क्रत्वर्थः प्रधानं पुरुषा(१)र्थः तेन नाङ्गप्रधानजिज्ञासा तावद्विदेवनादिविषया क्रत्वर्थपुरुषार्थजिज्ञासैव। तथा ऽग्निं चित्वा सौत्रामण्या यजेतेत्यादेरङ्गप्रधानाविधानार्थत्वे सौत्रामण्यादीनां क्रत्वर्थता. कालार्थे

(१) शबर४।१।१.

तु संयोगे पुरुपार्थता। तथा न स पापश्लोकं शृणोतीत्येवमपादेरर्थवादत्वे क्रत्वर्थपर्णमयीत्वादिस्तुतिद्वारेण क्रत्वर्थता-फलविधित्वे तु फलस्य पुरुपार्थत्वात्तद्द्वारेण पुरुपार्थतेति तस्याः क्रत्वर्थपुरुपार्थजिज्ञासायामन्तर्भावः।

प्रयोजकः कश्चित् पुरुपार्थो यथा दर्शपूर्णमासादिः स्वाङ्गानाम्-कश्चिद्ग्रहणम्-अपुरुपार्थमपि प्रयोजकमस्तीति-यथामिक्षा। अप्रयोजकः क्रत्वर्थो यथा वाजिनम्। अत्रापि कश्चिद्ग्रहणमनुवर्त्तते। विद्यते ह्यप्रयोजकोऽपि पुरुपार्थः-यथा गोदोहनादिः प्रणयनादेः। तदेवमुभयत्रोभयसम्भवेऽपि प्रायेण पुरुपार्थाः प्रयोजका इति पुरुपार्थशब्देन प्रयोजको लक्ष्यते। क्रत्वर्थशब्देन तु तत्प्रतियोगिवाचिनाऽप्रयोजको लक्ष्यते। तेन (१)वक्ष्यमाणं सुखग्रहणार्थं श्रोतृबुद्धिसमाधानार्थं च सूत्रेणानेन कथ्यते। नात्र संशयपूर्वपक्षोत्तरपक्षैः प्रयोजनम्।

अथ वा यो नाम-'विधेः प्रयोजकत्वं नास्ति स हि न तावद्वाय्वादिवत्पुरुषं प्रवर्त्तयेत्, प्रमाणत्वात्। अतः पारिशेष्यात्समीहितसाधनत्वप्रतिपादकत्वेनास्य प्रवर्त्तकत्वमिति वक्तव्यम्। न च तावता प्रवृत्तिः सिध्यति, स्वयमननुष्ठितस्यापि मेघच्छादेरिव समीहितसाधनत्वसम्भवात्। तस्माद्विधेः प्रयोजकत्वाभावात्प्रयुक्तिविशेषविचारो न कर्त्तव्य'इति मन्यते-तत्प्रतिबोधनायेदं

(१) क० ख० ग० घ० पुस्तकेषु सर्वत्रैवमेव पाठ। 'वक्ष्यमाणस्य' इति पाठोऽपेक्षित. प्रतिभाति।

सूत्रम् । अस्ति प्रयोजकत्वं विधेः, तथा लोके दर्शनात् । कर्तृसमीहितसाधनत्वं विषयस्य विधिरवगमयति न समीहितसाधनत्वमात्रम् । ततः प्रवर्त्तकत्वाद्विधेः प्रयुक्तिलक्षणमारम्भणीयमिति ।

२—क्रत्वर्थपुरुषार्थत्वलक्षणाधिकरणम् ।

## यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणा-विभक्तत्वात् ॥ २ ॥

वक्ष्यमाणयोः क्रत्वर्थपुरुषार्थयोर्लक्षणमुच्यते । तत्रभाष्यम्-'यस्मिन् पदार्थे कृते' इत्यादि 'नान्यथा' इत्यन्तम्(१) तदर्थतोऽनुभाष्यासिपति-'यस्मिन् कृते पदार्थे पुरुषस्य प्रीतिरुपजायते' स्वर्गादिलक्षणा 'स पुरुषार्थः पदार्थः' दर्शपूर्णमासादिः । कुतः । 'तस्य लिप्साऽर्थलक्षणेति'(२) 'किमुक्तं भवति । यदि तावल्लिप्साशब्देनानुष्ठानमुच्यते(३)' तद्धि पुरुषार्थेषु फलेच्छानिबन्धनत्वादर्थलक्षणं क्रत्वर्थेषु तु शास्त्रायत्तमनुष्ठानमितिमतम्-तदयुक्तम् । 'न हि क्रत्वर्थेष्वपि विधिना बलात्पुरुषः प्रवर्त्यते'(४) किं तु समीहितसाधनत्वबोधनेनैव । तेनोभयत्रापि समीहितसाधनत्वावगमे सतीच्छायीनैव प्रवृत्तिः । अथ साधनतैव पुरुषार्थेष्वर्थलक्षणा क्रत्वर्थेषु शास्त्रायत्तेत्युच्यते-तदपि न युक्तम् , उभयत्रापि साधनत्वस्य शास्त्रायत्तत्वात् । नहि दर्शपूर्णमासादेः शास्त्रमन्तरेण फलसाधनत्वमवगम्यते ।

---

(१) शावर पृ०४३६ पं०२-४१. (२) टुप्टी०पृ०१.
(३) टुप्टी०पृ०१. (४) टुप्टी०पृ०१.

स्यान्मतम्—लिप्साशब्देन शेषत्वमुच्यते, अर्थशब्देन चोपादानापरपर्यायो विध्याक्षेपः, शास्त्रशब्देनापि विनियोगः। तदनेनेदृशं लक्षणमुक्तं भवति—यस्यौपादानिकमेव शेषत्वं स पुरुषार्थः—यथा दर्शपूर्णमासादिः यथा च स्वर्गादिः। उभयोरपि हि यथाक्रमं फलशेषत्वं पुरुषशेषत्वं चौपादानिकम्। सति तु विनियोगे क्रत्वर्थत्वमिति—

तदयुक्तम्-तथा हि—

अव्याप्ति लक्ष्यशून्यं च पुरुषार्थस्य लक्षणम्।
क्रत्वर्थलक्षणं यत्तु तदतिव्यापकं मतम्॥

अध्ययनस्य पुरुषार्थत्वमिष्टम्। न च तस्यौपादनिकमर्थज्ञानशेषत्वम्, प्रमाणान्तराधीनत्वात्, विधिना च तस्यानाक्षेपात्। न हि विधिरर्थज्ञानार्थतामन्तरेण न घटते यत्तदाक्षिपेत्। तस्मादव्यापकं लक्षणमिति। अपि च न चेदृशः पदार्थः समस्ति यस्यौपादानिकमेव शेषत्वम्। दर्शपूर्णमासादेर्हि यद्यपि फलशेषत्वमौपादानिकमेव तथापि नियोगशेषत्वं वैनियोगिकं, श्रुतिगम्यत्वात्। यदुच्यते-नियोगविषयतया हि यागरूपं प्रतीयते न तु कस्य चिदुत्पत्त्यर्थतयेति—तदयुक्तम्। उत्पाद्यत्वेनैव हि नियोगः प्रत्ययेनोच्यते कथं तदुत्पत्त्यर्थता यागस्य नावगम्यते। प्रकृतिप्रत्ययाभ्यां हि स्वार्थौ मिथोऽन्वितावभिधीयेते। न चान्वयो गुणप्रधानभावमन्तरेण सम्भवति। व्यक्तं च प्रत्ययार्थस्य नियोगस्य प्राधान्यमिति तस्मिन्नुपसर्जनीभूतप्रकृत्यर्थ-

विशिष्टेऽभिधीयमाने श्रौतमेव यागस्य शेषत्वम् । तद्यथा-द्वितीयया प्राधान्यवाचिन्या क्रियायाः शेषत्वं बोध्यमानं श्रौतमेव भवति। फलशेषत्वमपि यागस्य नौपादानिकं श्रुत्यादिगम्यत्वादिति न्यायरत्नमालायां दर्शितम्। तस्मान्न तावद्यागस्यौपादानिकमेव शेषत्वम् । फलस्य तु पुरुषशेषत्वं लौकिकमेव । न तत्रोपादानगन्धोऽप्यस्ति। स्वार्थमेव हि फलं कामयमानं कामिनं नियोज्यं स्वीकुर्वाणो विधिः कामं मति यागस्य केवलं शेषत्वमाक्षिपति न तु फलस्य पुरुषशेषत्वम्, तस्य पुरुषेण स्वयमेवावगतत्वात्। अनवगतत्वे वा नियोगेनाप्याक्षेपायोगात्। न हि पुत्रार्थं ब्रह्मवर्चसादिप्रार्थयमानं पितरं नियुञ्जानोऽपि जातेष्टिनियोगः पित्रर्थतां ब्रह्मवर्चसादेराक्षिपति। तस्मात्पुरुषार्थलक्षणं तावदयुक्तम्।

यदपि सति विनियोगे क्रत्वर्थ इति-तदप्यतिव्यापकं अक्रत्वर्थेऽप्याधाने सद्भावात् । तस्य ह्यग्नीनिति द्वितीयाश्रुतिगम्यमग्न्यर्थत्वम् । तस्मान्न विद्मः कोऽस्य भाष्यस्यार्थ इति ।

समाधत्ते । 'सत्यं क्रत्वर्थपुरुषार्थयोर्द्वयोरपि साध्यसाधनसम्बन्धो वैदिको'(१) न प्रमाणान्तरगम्यः तथा वैदिको वैनियोगिको न तु वेदबहिर्भूतोपादानपरिभाषाप्रमाणगम्य इति । न लिप्साशब्देन साधनत्वमुच्यते-यथैकदेशिभिरित्यर्थः-किं तु 'पुरुषार्थे' पदार्थे 'करणमिच्छात एव न नियोगतो' न विधितः । 'क्रत्वर्थे त्वनिच्छातः' इच्छातो न- कुतस्तर्हि-'नियोगतः'(२)। 'तेन

(१) टु०टी०-पृ० १. (२) टु०टी०पृ० १.

करणम्' अनुष्ठानम् 'अभिमेयोक्तम्'-तस्य लिप्सार्थलक्षणेति-इच्छाधीनेत्यर्थः । तेनेच्छाधीनानुष्ठानः पुरुषार्थः शास्त्राधीनानुष्ठानः क्रत्वर्थ इति ।

ननूभयत्राप्यनुष्ठानमिच्छात एव ।

सत्यम् । एतावांस्तु विशेषः । फले हि पुरुषस्य शास्त्रनिरपेक्षस्य रागतः प्रवृत्तेः साध्यप्रसूतत्वाच्च साधनानुष्ठानस्यार्थलक्षणत्वमुच्यते । क्रत्वर्थस्य तु शास्त्रीयक्रतूपकारायत्तमनुष्ठानं शास्त्रलक्षणमिति । एतदुक्तं भवति स्वयम्प्रार्थितसाध्याधीनानुष्ठानः पुरुषार्थः तदुपकारार्थः क्रत्वर्थ इति । यत्तु विधाद्वयरहितं-यथाधानमध्ययनं च-न तत्क्रत्वर्थं नापि पुरुषार्थं केवलाभिविधार्थत्वादिति । एवं च व्याचक्षते-फले तावत्स्वयमेव प्रवृत्तिः तत्साधनेऽपि सामान्यतस्तत एव । शास्त्रात्तु विशेषमात्रे । तदङ्गेषु शास्त्रायत्तसाधनपरिज्ञानोत्तरकालं भवन्ती प्रवृत्तिः शास्त्रलक्षणेति ।

भाष्यवार्तिकयोरप्ययमेव व्याख्या । यत्र सामान्यतः प्रवृत्तिरर्थलक्षणा स पुरुषार्थः । तद्विपरीतः क्रत्वर्थः तदुपकारार्थ इत्यर्थः । इतरथाऽऽधानस्य क्रत्वर्थत्वापत्तेः । तस्मात्स्वयं प्रार्थितफलनिमित्तानुष्ठानः पुरुषार्थः । तदुपकारार्थः क्रत्वर्थः ।

. तदनेनैव लक्षणेनार्थात्फलस्याविधेयत्वं सूचितमित्यभिप्रायेणोक्तम्-

फलांशे भावनायाश्च प्रत्ययो न विधायकः ।
यद्दृष्टं जैमिनिश्चात्र तस्य लिप्सार्थलक्षणेति ॥

यद्वा एतदेवानेन सूत्रेण प्रतिपाद्यते। न हि न्यायशास्त्रे तत्प्रतिपादने सम्भवति लक्षणपरत्वमुचितम् । तेनैवं व्याख्यानम् ।

उक्तं-प्रयोजकाप्रयोजकलक्षणं वक्तव्यमिति। तदभिधीयते। किं फलांशे विधिः प्रयोजको नेति । तत्र करणेतिकर्त्तव्यतांशवत्फलांशस्यापि विधेयभावनाविशेषणत्वेन विधेयत्वं यो मन्यते तं प्रत्युच्यते । यस्मिन् स्वर्गपश्वादावनुभूयमाने पुरुषस्य प्रीतिस्तुष्टिर्भवति तस्य लिप्सार्थलक्षणा स्वारसिकीत्यर्थः । अविभक्तत्वात् । सर्वं हि फलं प्रीत्या ऽविभक्तं भवति । यत्तु भावनाविशेषणत्वात्फलाप्रधानमिति । सत्यम् । विशिष्टविधिर्विशेषणं गोचरयति यद्यन्यतो न लभ्यते । विशिष्टभावनाविध्युत्तरकालमर्थाद्विशेषणे विधिः कल्प्यमानो यत्र विधिमन्तरेण प्रवृत्तिर्न लभ्यते तत्रैव कल्प्यते नान्यत्रानुपपत्त्यभावात् । फले च रागत एव निसर्गसुन्दरे पुरुषः प्रवर्त्तते इति किं विधिना । तस्माद् विधेयं फलम् । किं भवति प्रयोजनम् । श्येनविधिनाऽभिचारस्य विधानात्प्रतिषेधाप्रवृत्तेरनर्थत्वं न स्यादयम् पूर्वः पक्षः। सिद्धान्ते त्वविधानात्प्रतिषेधविषयत्वेनानर्थत्वमिति ।

प्रकृतमनुसरामः । अत्र चोदयति-'दुःखाकरत्वात्कथं यागः पुरुषार्थः'(१) । यद्धि पुरुषस्यानुकूलवेदनीयं तत्पुरुषार्थम् । न च दुःखाकरस्य यागस्यानुकूलवेदनीयता ऽस्तीति ।

उत्तरत्वेन 'अविभक्तत्वादिति'(२) सूत्रावयवं योजयति-

(१) तु० टी० पृ० २ । (२) मी० सू० ४-१-२ ।

'साध्येनाविनाभावात्साधनस्य पुरुषार्थतोक्ता'(१)। साध्ये प्रार्थ्यमानस्य साधनमन्तरेण तदलाभात् साधनमप्यनुकूलवेदनीयं भवत्येवेति।

'एवं वा फलार्थवादत्वादनुदाहरणमनतिदृश्यमित्यादि'(२) गतार्थम्।

'गोदोहनादीनि वाक्यात्पुरुषार्थानि प्रत्यक्षेण क्रतूपकारकाणि दृश्यन्ते। तस्मात्समुच्चयेन पूर्वः पक्षः'(३)। अस्यार्थः। यद्यपि पशुकामपदसमभिव्याहारात्पुरुषार्थत्वन्तस्य तथापि क्रत्वर्थप्रणयनाश्रयणात्तन्मुखेन क्रतूपकारकत्वं तावदवश्यमङ्गीकर्त्तव्यम्। तत्र यद्यनङ्गमेवेदं क्रतोः स्यात्ततस्तस्य स्वाङ्गहानाद्वैगुण्यं स्यात्। विगुणक्रत्वाश्रयाच्च गुणादपि न फलं सिद्ध्येत्। तस्मादुभयानुग्रहार्थं क्रत्वर्थत्वमप्येषामस्त्विति।

'सिद्धांतस्त्ववधारणया'(४)। कथमवधारणा। 'पुरुषार्थान्येवे'ति(५)। कुतः। 'तादर्थ्यलक्षणेन शेषत्वेन'(६)-तादर्थ्यलक्षणत्वाच्छेपत्वस्येत्यर्थः। न ह्युपकारलक्षणं शेषत्वं-येन क्रतूपकारत्वात्तच्छेषत्वं स्यात्-किं तु तादर्थ्यलक्षणम्। न चैषां क्रत्वर्थत्वे प्रमाणमस्ति, वाक्यस्य पुरुषार्थत्वमात्रे पर्यवसानात्, प्रकरणस्य च संयुक्तेष्वप्रवृत्तेः, अनङ्गस्यापि चोपकारकत्वाविरोधात्।

यत्तु क्रतोर्वैगुण्यं स्यादिति-तद्यदि चमसलोपाभिप्रायेण-हन्त त्वत्पक्षेऽपि समानम्। यद्यपि गोदोहनं क्रतोरङ्गं स्यात्तथापि

(१-३) टु० टी० पृ० २। (४-६) टु० टी० पृ० २।

तद्वति प्रयोगे चमसो न प्रवर्त्तत एव । अथाङ्गत्वे सति-तत एव क्रतूपकारसम्पत्तेरङ्गमपि चमसो नाद्रियेत । उपकाराय ह्यंगान्यपेक्ष्यन्ते न स्वनिष्ठानीति । तथा सति पुरुषार्थेनापि तत्सम्पत्त्यविशेषादङ्गलोपो न दोषः । अतश्च यथैव नैमित्तिकेन सास्रदश्यादिनाऽङ्गेनावरुद्धे प्रयोगे ऽपि नित्यपाश्चदश्यादेरनङ्गत्वं तथा पुरुषार्थेनानङ्गेनाप्यवरुद्धे प्रयोगे तद्बाधादेव चमसादेरनङ्गत्वाचल्लोपो न दोषः । तेन पशुकामप्रयोगे प्रणयनमात्रमङ्गम्, अन्यत्र तु चमससाधनकं प्रणयनमिति पुरुषार्थान्येव गोदोहनादीनि ।

अत्र भाष्यकारेण पूर्वपक्षावस्थायां 'प्रत्यक्ष उपकारस्तेभ्यो दृश्यत'(१) इत्युक्त्वा 'द्रव्यगुणसंस्कारेषु बादरिरि'त्युक्तम्(२) ।

सिद्धान्ते तु-'न च य उपकरोति स शेषः । यस्तु यदर्थः श्रूयते स तस्य शेष' (३)इत्युक्त्वा 'शेषः परार्थत्वादि'त्युक्तम्(४) । 'अस्माच्च भाष्यग्रन्थादनुमीयते बादरिमते पूर्वः पक्षस्तत्र' बादर्यधिकरणे इति(५) ।

बादर्यधिकरणं हि द्वेधा व्याख्यातम् । उपकारलक्षणशेषत्वाभिप्रायेण द्रव्यादिष्वेव शेषत्वमिति शेषत्वावधारणया बादरिमतं पूर्वपक्षं कृत्वा कर्म्मादिष्वपि शेषत्वमस्ति पारार्थ्यलक्षणत्वादिति जैमिनिमतं सिद्धान्तितं प्रथमे व्याख्याने । द्वितीये तु बादरिमतमपि सिद्धान्तपक्षीकृत्य द्रव्यादिषु शेषत्वमेवेति द्रव्या-

(१-४) शाबर० पृ० ४३६ ।          (५) टु० टी० पृ० २ ।

दीनि शेषत्वेन नियम्य कर्मादिषु शेषत्वं शेपित्वं चेत्युक्तम्। तत्र प्रथममेव व्याख्यानमभिमतमित्यतो ग्रन्थादनुमीयते।

*'एवं चाद्रव्यार्जननियमः क्रत्वर्थः'(१)। द्रव्यार्जनं च तन्नियमश्च द्रव्यार्जननियमः। यदिदं प्रतिग्रहाद्युपायेन नियत द्रव्यार्जन तत् क्रत्वर्थमित्यर्थः। कुतः। 'तेन' 'क्रतुना' हि द्रव्य माकाङ्क्षित' तेन क्रतुविधिनैवार्थाद्विधीयमानत्वात् द्रव्यार्जन क्रत्वर्थम्। युक्त्यन्तरं चाह—'तदित्थमुपादेयम्'। यदेव क्रत्वर्थ

(१) टु० टी० पृ० २।

*इद पाठान्तर 'क' 'ग' पुस्तकयो पाठान्तरत्वनस्पष्ट निवेशितम्। एव वा द्रव्यार्जनमेवात्र चिन्त्यते किं क्रत्वर्थ पुरुषार्थमिति। नियमस्तु पूर्वपक्षे हेतुत्वेनोच्यत। यदर्थं च द्रव्यार्जन तदङ्गभूतो नियमोऽपि तदर्थ एव, अङ्गप्रधानयोरेकार्थत्वात्। तत्रार्जनस्य क्रत्वर्थमुपपादयितु नियमस्य तावत् क्रत्वर्थत्वमाह—'द्र यार्जननियम क्रत्वर्थ'। ननु क्रतावर्जनाभावात् कथ तन्नियमस्य क्रत्वर्थता अत आह—'तेन हि' क्रतुना 'द्रव्यमाकाङ्क्षितम्'। तस्मात्क्रतुना सहास्यैकवाक्यता, अपेक्षितत्वादिति' ग्रन्थसम्बन्ध। कथमेकवाक्यतेत्याह—यत् क्रतोरपेक्षितं द्रव्यमवश्य येन केन चित्प्रकारेणोपादेय—तदित्थमुपादेय-प्रतिग्रहादिना नान्यथेत्येव क्र वेकवाक्यता। तस्मात्क्रत्वर्थ, यथावघातादय। तस्मात् क्रतुविधिना अर्थात् द्रव्यार्जनमाक्षिप्तमिति युक्ता तन्नियमस्य क्रत्वर्थता। तस्मा दर्जनाङ्गमेव नियमो न स्वय फलवान्। न चाक्रत्वर्थत्वे द्रव्यार्जनस्य तदङ्गता नियमस्य घटत इत्यङ्गवशेन क्रत्वर्थमेवार्जनमग्निवशेनैवाहिताग्निविषया क्रतव। तस्मात् क्रत्वर्थमेव द्रव्यम्। तस्मा देव तु पुरुषस्यापि जीवनमनुपपत्या क्रतुरेवानुमन्यते इति।

ननु पुरुषार्थमपि द्रव्य अपेक्षितम्। तत्कथमेकान्ततः क्रत्वर्थ त्वमत आह—'इतरत्र' पुरुषार्थपक्षे सत्यं द्रव्यमाकाङ्क्षित तत्क्षु त्प्रतिघातार्थं तत. किमित्याह—'अनियमेनाप्युपात्त क्षुध विहन्त्येव' तस्माच्च तत्रार्जनस्य पुरुषार्थत्वपक्षे नियमस्य विधीयमानस्य फल मर्जनाङ्गतायां घटते। न ह्येवं नियन्तु शक्यते—प्रतिग्रहोपार्जितमेव द्रव्यं ब्राह्मणस्य क्षुत्क्षयकरमिति। अन्यादृशेनापि तत्क्षयदर्शनात्। अथादृष्टमेवमुपात्ते द्रव्ये भवतीति कल्प्यते तथा सत्यश्रुतफलव चनेनैकवाक्यतादोषः। तदाह—'अश्रुतमप्यध्याहृत्य तेन सहैकवा क्यता' नियमस्य 'कल्पयितव्या'। सा चान्याय्येति। यैस्तु नञ् न पठ्यते तेषामेकग्रन्थतैव—'अनियमेनाप्युपात्त क्षुध विहन्त्येव। तस्मात्तत्र नियमस्य फलमश्रुतमध्याहृत्य तेन सहैकवाक्यता कल्पयितव्येति'।

ननु क्रत्वर्थत्वपक्षेऽपि तदेकवाक्यता कल्प्यैव अप्रकरणस्थत्वादत आह—'इतरत्र' क्रत्वर्थत्वपक्षे श्रुतेन क्रतुनैकवाक्यता, एतदुक्त भव ति—पक्षद्वयेऽप्येकवाक्यता कल्प्या। त्वत्पक्षे त्वश्रुतेन मम तु श्रुते नेति। क्रत्वर्थे च द्रव्यार्जने सति 'हिरण्यादिनाशे च क्रत्वर्थद्रव्य नाशात्क्रतुवैगुण्ये' क्रतुवैगुण्यादित्यर्थः। 'क्षामवत्यादीनां क्रतुप्रतिस माधानार्थमुपदेशो युक्तो' भवति। 'इतरत्र' तु पुरुषार्थत्वपक्षे 'क्रतु वैगुण्याभावात्' समाधानापेक्षा नास्तीति—'फलकल्पनैव'। या द्रव्यार्जननियमस्य दोषत्वेनोक्ता फलकल्पना सैव प्राप्नोति। तस्मा त्क्रत्वर्थत्वम्—इत्येव प्राप्ते ब्रूमः।

'श्रुत्याद्यभावादनङ्गं क्रतोरर्जनम्। नन्वसत्स्वपि श्रुत्यादिषु प्र योजनेन तावद्भवितव्यम्। तत्राश्रुतफलवचनेनैकवाक्यतातः श्रुतेन क्रतुनैवैकवाक्यत्व युक्तमत आह—'पुरुषस्य च प्रीतिमुत्पादय न्ति'—अर्थाः—'कामश्रुतिनिरपेक्षा'। प्रत्यक्षमेवैतदर्जित द्रव्यम्—

क्रतुसम्बन्धमनपेक्ष्यैव—'पुरुषं प्रीणयतीति' तदर्थमेवार्जनम्।

ननु चैवं नियमस्यानर्थक्यं भवति । अन्यथोपात्तेनापि पुरुषः प्रीयत एव । अतो नियमस्यावश्यमदृष्टं कल्पयितव्यम्।

सत्यम् । तत्तु क्रत्वर्थत्वेऽप्यविशिष्टम् । तत्रापि ह्यवश्यमेवं विधमर्जनं द्रव्यद्वारेण तत्साध्ये क्रतावुपकारविशेषमादधातीतिकल्पयितव्यमेव । तदप्रतिपक्षकत्वगतादृष्टकल्पनातः स्वभावपुरुषार्थद्रव्यार्जनविषयस्य नियमस्य तद्द्वारप्रतिपन्नतच्छेषिभूतपुरुषार्थत्वावगमात्तद्गतमेव यावज्जीवादिनियमवत्प्रत्यवायपरिहाररूपं प्रयोजनं युक्तम्। तेन नियमस्यापि पुरुषार्थत्वात्र तद्वशेनापि द्रव्यार्जनं क्रत्वर्थं किमिदानीं प्रतिग्रह· प्रत्यवायक्षयकरः । यद्येव अजस्रमेव यथाशक्ति प्रतिग्रहीतव्यं स्यात् । तन्न । प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेदिति प्रतिषेधात् । तेन दायशिलोञ्छायाचिताभावे यथाकथंचिद्द्रव्योपादाने ऽवश्यंभाविनि प्राप्ते प्रतिग्रहादिनैव कुर्वतोऽदृष्टसिद्धिरिति कल्प्यते ।

अन्ये तु प्रतिग्रहादिनियममुपायान्तरप्रतिषेधार्थं व्याचक्षाणास्तेषामेव प्रत्यवायकरत्वं कल्पयन्ति, न तु प्रतिग्रहादीनां किञ्चित्फलम् । 'नियमवचनात्काममदृष्टं कल्प्येते'ति भाष्यमुपायान्तरप्रत्यवायकल्पनपरं, न प्रतिग्रहादिफलकल्पनपरमिति न कश्चिद्दोषः । इत्थमनाङ्गं क्रतोः क्रतुविधिना द्रव्यार्जनस्यानाक्षेपात् । यदि हि तेनाक्षिप्येत कतस्तद्गोचरो नियमः क्रत्वेकवाक्यतां यायात्—न त्वेतदस्तीत्याह—'शरीरधारणार्थमेवासौ' पुरुषो द्रव्यं—'उपादत्ते । अन्यथाऽनुपपत्त्या च कामः श्रुतिभिराक्षिप्येत' । न चासावस्तीत्याह—'तत्र पुरुषार्थेनोपार्जितमस्तीत्यन्यथाऽनुपपत्ति. क्षीयते' । (१)

(१) 'यथा आधाने वसन्तादिविधिप्रयुक्ते लब्धेन कामश्रुतीनां तदाक्षेपकत्वम्' इत्यधिकमत्र 'क' पुस्तके ।

द्रव्यार्जनं तदेवेत्थं प्रतिग्रहाद्युपायनियमेनोपादेयं भवति, 'यथाऽवघातादयः' क्रत्वर्थाः एवमयमपि नियमः । 'तस्मात् क्रतुविधिनैव सहास्य' नियमविधेरे'कवाक्यताऽपेक्षितत्वात्' । क्रत्वपूर्वं ह्यदृष्टत्वान्नियममपेक्षते । प्रतिग्रहाद्युपायनियमस्तावत् द्रव्यार्जनोद्देशेन विधीयमानस्तदङ्गम् । अङ्गं च स्वरूपे कार्ये चोपयोगि भवति । न चायं नियमो द्रव्यार्जनस्वरूपे उपयुज्यते । विनापि तेन तत्सिद्धेः । कार्यमपि यदि क्रत्वपूर्वं स्यात्तस्यादृष्टत्वात्तदुपयोगित्वं नियमस्य युक्तं भवति । तस्मान्नियमबलादेव द्रव्यार्जनं क्रत्वर्थमिति कल्प्यते । 'इतरत्र' पुरुषार्थत्वपक्षे क्षुत्प्रतिघातार्थं द्रव्यमनियमेनाप्युपात्तं क्षुधं घ्नन्त्येव । तस्मान्न तत्र नियमस्य फलमस्ति द्रव्यार्जनस्वरूपे तत्कार्ये वा, अनुपयोगात्तत्रार्जनाङ्गत्वं प्रतीयमानमुत्सृज्या'श्रुतं फलमध्याहृत्य तेन सहैकवाक्यता' नियमस्य 'कल्पयितव्येति' । यैस्तु नञ् न पठ्यते तेषामेकग्रन्थतैव । 'तस्मात्तत्र नियमस्य फलमश्रुतमप्यध्याहृत्य तेन सहैवाक्यताकल्पयितव्येति' ।

ननु क्रत्वर्थत्वेऽपि तदेकवाक्यताकल्पयितव्यैवात आह—'इतरत्र'(१) क्रत्वर्थत्वपक्षे—'श्रुतेन'(२) क्रतुविधिना—'एकवाता'(३) तदन्यत्राश्रुतेनेति विशेषः । तस्मात्सर्वमेव द्रव्यं क्रत्वर्थम् , तन्मात्रोद्देशेन नियमविधानात् । अवघातादिनियमो हि प्रकरणस्थत्वात्क्रत्वर्थव्रीह्युद्देशेन विधीयमानो न व्रीहिमात्रस्य

(१-३) टु०टी०पृ० २ ।

क्रत्वर्थतामापादयतीति । प्रतिग्रहाद्युपायनियमस्तु द्रव्यार्जनमात्रोद्देशेन विधीयमानस्तन्मात्रस्यैव क्रत्वर्थतां सूचयति । तस्मात्सर्वं द्रव्यं क्रत्वर्थम् । क्रत्वर्थे च द्रव्यार्जने सति—'हिरण्यादिनाशे च क्रत्वर्थद्रव्यनाशात् क्रतुवैगुण्ये क्षामवत्यादीनां क्रतुप्रतिसमाधानार्थमुपदेशो युक्तो'(१) भवति । तदा ह्यव्यभिचरितक्रतुसम्बन्धद्रव्यमुखेन क्रतुरुपतिष्ठते । 'इतरत्र'(२) पुरुषार्थपक्षे क्रतु—'वैगुण्याभावात्'(३) क्रतोश्चानुपस्थानात्तत्समाधानापेक्षा नास्तीति (४)'फलकल्पनैव' प्राप्नोति । तस्मात् क्रत्वर्थत्वं द्रव्यार्जनस्य —'इत्येवं प्राप्ते ब्रूमः'(५)।

'(६)श्रुत्याद्यभावादनङ्गं क्रतोः पुरुषस्य तु प्रीतिमुत्पादयन्त्य'र्जिता अर्थाः—'कामश्रुतीनिरपेक्षाः'(७) ज्योतिष्टोमेनेत्यादिनिरपेक्षाः । तस्मात्पुरुषार्थमर्जनम् ।

यत्तु क्रतुविधिविहितत्वात्क्रत्वर्थतेति—तत्राह—'शरीरधारणार्थमेवासौ'(८) पुरुषो द्रव्यम्—'उपादत्ते'(९) । ततः किमित्यत आह—(१०)'अन्यथानुपपत्त्या'हि—'कामश्रुतिभिराक्षिप्येत । तत्र पुरुषार्थेनोपार्जितमस्तीति'(११) तेनैव क्रतोरपि सिद्धेः—'अन्यथानुपपत्तिः(१२) क्षीयते, यथाऽऽधाने' वसन्तादिविधिप्रयुक्ते लब्धेन कामश्रुतिभिस्तदाक्षिप्यते तथैतदपि।

'अपि च क्रत्वर्थे द्रव्यार्जने क्रतुविघातः'(१३) एव—'स्यात्'(१४) । कुत इत्याह—'देवतोद्देशेन च स्वद्रव्यपरित्यागे'

(१-७) टु० टी० पृ० २। (८-१४) टु० टी० पृ० २।

(१) क्रियमाणे–'यागो भवति'(२) । च शब्दो हेतौ भिन्नक्रमश्च । (३)'स्वद्रव्यपरित्यागे' हि क्रियमाणे 'यागो भवति'(४) ततः किमित्याह--'क्रतुप्रयुक्तत्वे'(५) स्वीय'द्रव्याभावात्परित्यागो नास्तीति'(६)क्रतुविघातः स्यात् । यथेष्टविनियोज्यत्वं हि स्वत्वम् । केवलक्रत्वर्थत्वे त्वन्यत्राविनियोगाद्यथेष्टविनियोज्यत्वाभावात्स्वत्वाभाव इति । एतच्च प्रायेणैवंभूतस्य स्वत्वमुपलब्धमिति मत्वोक्त न त्वेतदेव तन्त्रम् , क्रत्वर्थतयैव क्रयेणोपात्तस्य सोमस्य स्वत्वानपायादिति । एवं च नियमस्यार्जनाङ्गत्वात्तदतिक्रमे पुरुषस्योपायान्तरेणार्जने प्रत्यवायः कल्प्यते, न तु क्रत्वर्थत्वं प्रमाणवदिति ।

(७)अत्रानन्तरम् 'अपि चे'त्यादि भाष्यम् । तदेवं सति प्रयोग कालाद्बहिरित्यनेन सङ्गतार्थत्वात्तत्रैवोत्कृष्टव्यमित्यभिप्रेत्य लिङ्गदर्शनभाष्यमनुसंधत्ते--(८)'द्रव्यार्जने च प्रक्रान्ते सर्वक्रतूनां प्रक्रमात् अथवा एष स्वर्गाल्लोकाच्छिद्यत इति' । (९)अनेनापि चो'पक्रान्तानी'त्यादि–'अतिपातयेत्'(१०)-इत्यन्तभाष्यमर्थतः पठितमाक्षिपति--(११)'यथारम्भविषयमतिपातनं' पौर्णमास्यमावास्याशब्दयोः प्रधानयजिनामत्वात्प्रधानारम्भविषयमतिपातनं 'ततो घटत'(१२) एव । पूर्वपक्षेऽपि लिङ्गमङ्गभूत-

---

(१-६) टु० टी० पृ० २ । (७) शबर० पृ० ४३७ ।
(८) टु०टी०पृ० २ । (९-१०) शबर० पृ० ४३७ ४३८ ।
(११-१२) टु० टी० पृ० २ ।

द्रव्यार्जनारम्भेऽपि प्रधानभूतयज्ञनारम्भोपपत्तेरिति--

समाधत्ते (१)'अथवाऽङ्गारम्भेणैव प्रधानस्यारब्धत्वादतिपातनाभावः' । पुनराक्षिपति--(२)'यागाकरणादतिपातनं पक्षद्वितयेऽपि पूर्वपक्षेऽपि घटत एव' । यदि ह्यनारम्भोऽतिपातनं स्यात्ततोऽङ्गभूतद्रव्यार्जनारम्भेणैव प्रधानारम्भात्तदतिपातनं न स्यात् । अननुष्ठाने त्वतिपातने सम्भवत्यङ्गानुष्ठानेऽपि प्रधानाननुष्ठानमिति सम्भवत्येव पूर्वपक्षेऽप्यतिपातनदर्शनमिति नातीव सिद्धान्तलिङ्गतया स्थातव्यमिति ।

ये तु नियमस्यैव क्रत्वर्थत्वं पुरुषार्थत्वं चिन्तयन्तः पुरुषार्थमपि द्रव्यार्जनमस्तीति मन्यन्ते तेषां पुरुषार्थस्यापि द्रव्यार्जनस्य सद्भावाच्च नियोगतस्तदनुष्ठाने कर्मोपक्रमः स्यात् । 'तत्रोपक्रान्तानि सर्वकर्माणि द्रव्यार्जनेन भवेयु'रिति(३) लिङ्गदर्शनभाष्यमयुक्तं स्यात् । यदपि क्षामवत्यादीनां क्रत्वर्थार्जितद्रव्यसम्बन्धः पूर्वपक्षे लभ्यते इत्युक्तं तदपि पुरुषार्थस्यापि द्रव्यस्य सिद्धान्तवत्पूर्वपक्षेऽपि सम्भवादनुपपन्नं स्यादित्यास्तां तावत् ।

(४)'क्रत्वर्थे तु' द्रव्यार्जने बहिः प्रयोगेणानुष्ठीयमानेऽगृह्यमाणविशेषतया सर्वार्थत्वात्तदनुष्ठानेन—'सर्वक्रतूनां प्रक्रमात्'(५) युगपत्सर्वानुष्ठानासम्भवादन्यतरानुष्ठानेऽप्यनध्यवसायात् प्रक्रान्तानां चावश्यं समापनीयत्वादीश्वरेणापि च सर्व-

---

(१-२) टु०टी०पृ० २। (३) शबर० पृ० ४३७। (४-५) टु०टी०पृ० २।

समापनस्य दुःशकत्वात्—(१)'अशकनीयोर्थः स्यात्'शेपि विरोधात्।

(२)'अपि च यदि शास्त्रात्कर्मार्थं द्रव्यार्जनं तन्नान्यत्र' जीवनादौ-(३)'विनियुज्येत तथार्जितं'' द्रव्यं तत्र' जीवनलोपात् (४)'सर्वतंत्रपरिलोपः स्यात्' इतिभाष्यार्थमाह-'(५)क्रत्वर्थे च द्रव्यार्जने सति—(६)'तथार्जितस्य' क्रत्वर्थत्वेनार्जितस्य—'अन्यत्राविनियोगाच्छरीरनाशात्सर्वतन्त्रपरिलोपः स्यात्'(७)।

ननु मा नाम तथार्जितमन्यत्र विनियोजि पुरुषार्थार्जितेन जीविष्यत इत्यत आह—

(८)'न च' पूर्वपक्षवादिनो—'द्वे द्रव्यार्जने'(९) विद्येते 'एकं क्रत्वर्थमपर पुरुषार्थं'(१०) 'किं तर्हि एकमेवेदं' कुत इत्याह—(११)'द्रव्यमुपाददानस्यैवेते'(१२) प्रतिग्रहादयो —'नियमा उपदिश्यन्ते पुरुषस्येति'(१३) हेतोः द्रव्योपादानमात्रोद्देशेन नियमविधानात्तन्मात्रस्य क्रत्वर्थतेति पूर्वपक्षवादिनो मतमिति। अत एव बहिः सामवत्यादीनां क्रत्वर्थता पूर्वपक्षे वर्णिता। अन्यथा क्रत्वनेकान्तद्रव्यसम्बन्धात् सिद्धान्ततुल्यत्वं स्यात्। तेन न पूर्वपक्षे द्रव्यार्जनविशेषोद्देशेन नियमविधिः, विशेषप्रमाणाभावात्। तेन तन्मात्रे नियमविधानादन्यथोपात्तं द्रव्यं नास्त्येव। एतच्च क्रत्वर्थत्वमेवेत्यन्यत्र अविनियोगात् सर्वतन्त्रपरिलोपो दूषणमुच्यते।

---

(१) टु०टी०पृ० २। (२-४) शाबर० ४३७। (५-११) टु०टी०पृ २-३।
(१२) अत्र मुद्रितपुस्तके 'एव' इति पाठो न दृश्यते।
(१३) टु०टी०पृ० ३।

ये तु सर्वतन्त्रपरिलोपं क्रत्वनुष्ठानपरिलोपं व्याचक्षते तेषामयं ग्रन्थस्तावन्न घटते । कर्मार्थमुपात्तमन्यत्र न विनियुज्यतेति । कर्मभ्योऽन्यत्रेति हि गम्यते । न च क्रत्वनुष्ठानलोपः शक्यते वक्तुम् । तेषां हि मते नियममात्रस्य पूर्वपक्षे क्रत्वर्थता न तु सर्वस्यार्जनस्य । तेन नार्जितं द्रव्यं सर्वं सर्वक्रतूनामङ्गं येन कश्चिद्विनियोगो न युक्तः स्यात् । तेनोपस्थिते कस्य चित्कर्मणोऽनुष्ठाने कर्मार्थद्रव्यस्यार्जनेन वा प्रतिग्रहादिना पूर्वमार्जितस्य संकल्पवशेन वा तत्कर्मार्थतामेवापादयति न सर्वार्थताम् । तथा हि--अनेकपुरुषसाधारणस्यैवानेकक्रतुसाधारणस्यापि संविभागेनासाधारण्यं सम्पाद्य सम्भवत्येवानुष्ठानम् । तथा च दर्शपूर्णमासयोः सहावन्नंतीतिवचनात्संसृष्टं ध्रौवादिद्रव्यमाग्नेयाग्नीषोमीयसाधारणमपि विभज्य पश्चात्कर्मानुष्ठीयते । यद्यपि तत्र परमापूर्वमेकमस्ति तथाऽपि प्रत्येकं कर्मार्थता विभागेनैव क्रियते इति नास्ति क्रत्वनुष्ठानलोपः । तस्मात् यथोक्त एव भाष्यार्थ इति ।

'एवं च सति प्रयोगकालाद्बहिरेतदङ्गं तदनुपकारकं स्यात्'(१) इति भाष्यं व्याख्यातुमनुभाषितं तत्राशङ्काऽतिपातनग्रन्थान्तरमिदं भाष्यं कथं सर्वतन्त्रपरिलोपानन्तरं व्याख्यायत इति । तत्राह--'अनन्तरेण'(२) अतिपातनग्रन्थेन नायं ग्रन्थः सम्बध्यते । कथं तर्हि'(३)-केन तर्हि सम्बध्यत इत्यर्थः । तत्राह--

(१) शबर०पृ० ५४९। (२) टुप्टी०पृ० ३।

(३) अत्र मुद्रित पुस्तके 'न' इति पाठो न दृश्यते ।

'सर्वतन्त्रपरिलोपः स्यादित्यस्यायं शेषः'(१)। तेनातिपातनग्रन्थान्तरस्तं ग्रन्थमुत्कृष्य तच्छेषत्वेनायं ग्रन्थो योजनीय इति। तेनायं भाष्यार्थः–प्रयोगकालाद्बहिर्भूतमपि यदेतदङ्गत्वेनाभिमतं तदेवं सति सर्वतन्त्रपरिलोपप्रसङ्गे सत्यनुपकारकं क्रतोःस्यात्, प्रत्युत विघातकमेव स्यात्। शरीरविघातेऽनुष्ठानाघातादिति।

यथावस्थिते वा पूर्वग्रन्थे शक्यते एवायं ग्रन्थो व्याख्यातुमिति मत्वा व्याख्यानान्तरमाह–'अथ वा प्रयोगवचनबहिर्भावात्'(२)–अप्रकरणस्थत्वात् 'नेदं फलवतः'(३) क्रतोः–'अङ्गम्'(४) न चाप्रकरणस्थस्यापि जयादिवच्छ्रुत्यादिभिरङ्गत्वं तदभावादित्याह–'श्रुत्याद्यभावात्'(५)। नाङ्गमित्यनुषङ्गः। भाष्यस्य चायमर्थः। एवं सतीति न पूर्वोक्तोपजीवनं किं तर्हि द्रव्यार्जनस्य क्रत्वर्थत्वेऽपि दोषो निःप्रमाणकत्वं कथम्। यदेतदङ्गत्वेनाभिमतं द्रव्यार्जनं तत्प्रयोगकालात्प्रयोगवचनस्याङ्गजिघृक्षा यावन्तं कालं मनसि विपरिवर्त्तते तस्मात् कालाद्बहिर्भूतं सत् नाङ्गं स्यादित्यर्थः। ननु–'अनुपकारकमितिभाष्यं(६)' तत्कथमनङ्गमिति व्याख्यायते। तत्राह–'अङ्गत्वे चापनीतेऽनुपकारकं स्यादिति फलेनायं ग्रन्थः(७)'। अङ्गत्वस्य फलमुपकारकत्वं तन्निराकरणद्वारेणाङ्गत्वनिराकरणमेवेदमिति। एवं सति यत् सिद्धान्तोपक्रमे-(८)'श्रुत्याद्यभावा-

(१–५) तु० टी० पृ० ३। (६) शावर० पृ० ४३८।
(७–८) तु० टी० पृ० ३।

दनङ्गं क्रतो'रित्युक्तं तद्रूपैव भाष्यस्य प्रतिपाद्यं सत्प्रधान हेतुतया तत्रैवोक्तम्। इदानीं भाष्याच्छेदं क्रियत इति वेदितव्यम्।

व्याख्यानान्तरमाह-(१)'अथ वा प्रधानकालत्वादङ्गानाम न्यस्मिन् काले क्रियमाणमनुपकारकं स्यादिति'। 'न चाऽऽधानमङ्गभवितुमर्हतीति'भाष्यं(२) चरमे व्याख्याने तदेकवाक्यतया व्याचष्टे। 'यथाऽऽधानमन्यकालमपि प्रधानस्योपकारकं नैवमिदं'(३)-द्रव्यार्जन-कुतः-'कालविधेरभावात्(४)। आधाने हि कालविधिरस्ति वसन्ते ब्राह्मणोऽग्नीनादधीतेति। 'तस्मात् क्रत्वर्थं सदन्तस्तन्त्रमुत्पाद्य स्यात्'(५)। एतदेव दर्शयति-'स एव क्रतुः प्रक्रान्तस्तमेवोररीकृत्य द्रव्यमुपादद्येत'(६)। उपाददीयमित्यर्थः। ततः किमित्यत आह-(७)'एवं च'-अन्तस्तन्त्र (८)'द्रव्यार्जने'-क्रियमाणे सत्ययमपि लाभो भवति-न(९) 'सर्वकर्माणि प्रक्रान्तानि भवेयुः'(१०)। एतदेव दृष्टान्तेनोपपादयति-'यथाऽऽवहन्तिः पौर्णमासे क्रियमाणे न सौर्यस्योपकरोती'ति(११) न तदनुष्ठाने सौर्यस्योपक्रमो भवति। एवमिहा

---

(१) तु० टी० पृ० ३।

(२) शबर० पृ० ४३८। अत्र मुद्रित टुप्टीकायां 'न चैतदाधानव दि'ति पाठो दृश्यते। (३-७) तु० टी० पृ० ३।

(८) तु० टी० पृ० ३। अत्र मुद्रितपुस्तके 'द्रव्यार्जनने'ति तृतीया व पाठो दृश्यत।

(९) 'न' इति पाठो मुद्रितटुप्टीकाग्रन्थसम्मतो न प्रतिभाति।

(१०-११) तु० टी० पृ० ३।

पि नान्यस्य क्रतोरन्तः कृतं द्रव्यार्जनं क्रत्वन्तरमुपक्रान्तं करोतीति नावश्यं समापनीयं स्यात्। (१)'तस्मात्' क्रत्वर्थत्वे सति कालविध्यभावात् सर्वकर्म्मप्रक्रमदोषपरिहाराच्च—'प्रतिकर्म्म द्रव्यार्जनं न सर्वकर्म्मणां तन्त्रेणेति'(२)–युक्तम् ।

न चैतदिष्टम् । न च सम्भवति, क्रतुविलोपप्रसङ्गात् । कदाचिद्धि क्रतुः प्रक्रान्तः स्यान्न चार्ज्यमानं द्रव्यं लभ्यते । तस्मान्न क्रत्वर्थमिति ।

व्याख्यानान्तरमाह–'न चाऽऽधानवद्भवितुमर्हतीति । यथाऽऽधानं'(३)-अनन्यर्थं–'न क्रत्वर्थं नापि पुरुषार्थं'(४)–एवं द्रव्यार्जनमपि केवलं द्रव्यार्थमेव कस्मान्न भवतीति निराकृतस्वपक्षस्य पूर्वपक्षिणः सिद्धान्तप्रतिबन्धमात्रफलं चोद्यम्। पार्श्वस्थस्य वा कस्यचिदाशङ्काऽनेन निराक्रियते। अस्मिंश्च पक्षेऽन्यकालता न दोषः । न च सर्वारम्भप्रसङ्ग इति । निराकरणाभिप्रायमाह-उच्यते । आधानस्य वाक्येनान्यार्थतावगता । वसन्ते ब्राह्मणोऽग्नीनादधीतेति श्रौतेऽपि विनियोगे विशेषणविशेष्यभावो वाक्याच्च इति वाक्येनेत्युक्तम्। वाक्योदाहरणभाष्ये च (५)तत्र हि वचनं–'ब्राह्मणोऽग्निमादधीते'त्यत्र पूर्वव्याख्यायां कालविधिद्योतनाय वसन्तपदमुच्चैः पठितव्यम् । इदानीं तु द्वितीयान्तमग्निपदमनन्यर्थत्वद्योतनार्थमुच्चैः पठितव्यमिति । अस्य पुनरन्यार्थत्वे प्रमाणं

(१–४) टु०टी०पृ०२

(५) शबर पृ० ४३८ । अत्र मुद्रितभाष्यपुस्तके 'ब्राह्मण' इत्यस्य स्थाने 'वसन्ते' इतिपाठ उदाहरणवाक्ये संयोजितो दृश्यते।

नास्ति । प्रत्यक्षेण तु पुरुषार्थताऽवगम्यते ।

नन्वर्जनस्याऽर्थमात्रार्थता स्वभावादेव सिद्धा । पुरुषार्थताऽपि चास्य तद्द्वारेणैव न स्वारादुपकारकरूपेण । तत्कथमन्यार्थत्वे प्रमाणं नास्तीत्याशंक्योत्तरत्वेनास्यैव भाष्यस्याभिप्रायान्तरमाह —

'अथवाऽऽधानेनाग्नय(१) उत्पाद्यन्ते'(२)। ततस्तस्य तन्मात्रार्थता युक्ता । 'नत्वेतेन'(३)-अर्जनेन-'व्रीह्यादय'(४)उत्पाद्यन्ते; अतो न तत्स्वरूपमात्रार्थमर्जनम् । तद्द्वारेण त्वन्यार्थमेवावघातादिवत् । तत्र च क्रत्वर्थत्वे प्रमाणाभावात्पुरुषार्थत्वमिति । भाष्यं चाग्नीनादधीतेति निर्वर्त्यकर्माभिधायि द्वितीयापदर्शनपरं व्याख्येयम् । अग्नीनादधीतेति निर्देशे कर्माभिधायिन्या द्वितीययाऽग्नीनां निर्वर्त्यत्वावगमात्तन्निर्वर्तकमाधानं तदर्थमिति युक्तम् । न त्वेवमर्जनमिति ।

तत्पुनरिदं मन्दमिवोत्तरम् । अनिर्वर्तकस्यापि तादर्थ्याविरोधात् । निर्वर्तकस्यापि च संयवनस्य पुरोडाशस्वरूपार्थत्वानभ्युपगमात् निर्वर्तकं यागफलमित्यादि हि विशेषमात्रमित्याशंक्य पुनरेतदेव भाष्यमुत्तरत्वेन योजयति—'अथ वा द्रव्यार्जननियमः फलवत्त्वात्पुरुषार्थः'(५)। तस्य हि पुरुषे फलं प्रत्यक्षमेव—'आधानं तु न पुरुषार्थम्'(६)-तत्र फलाभावात्, न क्रत्वर्थं श्रुत्याद्यभावात् । अतोऽनन्योपायकाग्निमात्रार्थमेव तदिति ।

---

(१) अत्र लिखितपुस्तकेषु 'धरूपः' इति पाठः ।

(२-६) टु० टी० पृ० ३ ।

यद्वैवं व्याख्या। युक्तमाधानस्य क्रत्वर्थत्वम्। न ह्यग्नीनां क्रतोरन्यत्फलमस्ति यत्प्रयुक्त्यैषामर्जनं स्यात्। तेनाधानविधिना वा तेषामर्जनं कामश्रुतिभिर्वा। तत्र प्रत्यक्षविधिविहिताऽऽधानार्जिताग्निलाभेन कामश्रुतयस्तदर्जनोपायं क्रयणादिकमाक्षिपन्तीति युक्तमाधानविधिरक्रत्वर्थोऽपि क्रतावेव नियमं फलतीति। एतेनाध्ययनविधेरपि नियमार्थता व्याख्याता। नत्वेवं द्रव्यार्जनस्य सम्भवतीति द्रव्यस्य क्रतुसम्बन्धमनपेक्ष्यैव पुरुषे फलवत्त्वान्नियमविधिमृतेऽप्युपभोगत एव तस्य प्रयुक्तिसम्भवादसत्यर्जनविधौ न क्रतोराक्षेपकत्वमापद्यत इति न तत्प्रतिबन्धद्वारेण नियमफलत्वमक्रत्वर्थस्यार्जनस्य सम्भवतीत्यवश्यमस्य क्रत्वर्थत्वं पुरुषार्थत्वं वाऽङ्गीकार्यम्। इतरथा विधिवैयर्थ्यात्। तत्राप्रकरणस्थत्वात्पुरुषार्थत्वमिति। भाष्यमप्येवं व्याख्येयम्। अग्निमादधीतेत्यनन्योपायानन्यप्रयोजनान्यर्थत्वमाधानस्यावगम्यत इति।

व्याख्यानान्तरमाह-'अथ वाऽऽधानशब्देनाहवनीयादयोऽभिधीयन्ते'(१) लक्षणया। कस्तदा भाष्यार्थः। पूर्वग्रन्थस्य हि द्वितीये व्याख्याने प्रयोगवचनबहिर्भावान्नाङ्गत्वं द्रव्यार्जनस्येत्यर्थः प्रदर्शितः। तत्र-'यथा बहिःप्रयोगेऽप्याहिता अग्नयो(२)-ऽङ्गत्वं प्रतिपद्यन्ते एवं कस्मान्न भवतीति परिचोदिते सत्याह-

(१) टु०टी०पृ० ३।

(२) टु०टी०पृ० ३। अत्र मुद्रितपुस्तके 'अथाहिता अग्नयः' इत्यस्य स्थाने 'श्रुता' इति पाठो दृश्यते।

'न चाऽऽधानवद्भवितुमर्हती'ति(१)। 'न चैतदाहवनीयाद्भवितुमर्हतीत्यर्थः' (२)। कुतः- 'तत्र आहवनीयादय(३):' अग्नीनादधीतेतिवाक्यविहितेनाऽऽधानेन- 'उत्पन्ना(४):'- किमस्माभिः प्रयोजनमिति- 'साकांक्षाः सन्तो वाक्येन'(५) यदाहवनीये जुहोतीत्यनेन होमा'ङ्गतां प्रतिपद्यन्ते'(६)- विनाऽपि प्रकरणेन । -'(७)इह'- द्रव्यार्जने 'तादृशं नास्ति वाक्यं(८)' यद्द्रव्यार्जनं कर्मणि विनियुङ्क्ते । भाष्ये चाधानवाक्योदाहरणं यदाहवनीये जुहोतीत्यस्याप्युपलक्षणार्थमिति व्याख्येयम् । 'अथ याज्ञिक्यमुक्तम्'(९)- इत्यादि- 'उपपद्यत'(१०)- इत्यन्तं भाष्यमर्थतोऽनुभाषते- 'गृहदाहेऽप्यङ्गत्वाय वा फलाय वेति(११)' । अत्र फलायेत्येतदेवाभिमतमङ्गत्वं त्वनभिमतमेवेति दर्शयति- 'अङ्गत्वे नास्ति प्रमाणं'(१२)- तदभिधानं त्वनास्थया । न ह्यनेन द्रव्यार्जनस्य पुरुषार्थता व्यावर्त्यते इति । ये च नैमित्तिकानां कर्मणामफलत्वमिच्छन्ति तेऽनेनैव भाष्येण दाहनिमित्तानामपि क्षामवत्यादीनां फलत्वप्रदर्शनेन निराकृताः ।

सूत्रमपि सर्वपुरुषार्थानां प्रीत्यविनाभावं दर्शयति- 'यस्मिन् प्रीतिरिति'(१३)- 'अविभक्तत्वादिति(१४)'च । प्रीत्या विभक्तत्वं पुरुषार्थत्वहेतुं दर्शयंस्तादृशस्य नास्ति पुरुषार्थतेति दर्शयति ।

यत्त्वस्य व्याख्यानं 'पुरुषस्य क्रतुसम्बन्धाविभागादिति

---

(१-८) टुप्टी०पृ० ३। (९-१०) शाबर० पृ० ४३८।
(११-१२) टुप्टी०पृ० ३। (१३-१४) मी०सू० ४।१।२।

तदपि भाष्यविरुद्धम् । भाष्यकारो ह्यविभक्तः पुरुपार्थः प्रीत्येति प्रीत्यविभागं दर्शयति । युक्तितोपि चैपपक्षो न घटत इति यथाशक्ति निर्णये निर्णीतमित्यास्तां तावत् ।

तत्सिद्धं प्रीत्या'ऽविभक्तत्वात्'(१)-द्रव्यार्जनं पुरुषार्थमिति ।

## ३—प्रजापतिव्रतानां पुरुषार्थताधिकरणम् ।

**तदुत्सर्गे कर्माणि पुरुषार्थाय, शास्त्रस्यानतिशङ्क्यत्वात् । न च द्रव्यं चिकीर्ष्यते तेनार्थेनाभिसम्बन्धात्क्रियायां पुरुषश्रुतिः ॥ ३ ॥**

यदि प्रीत्यविभक्तत्वाद् द्रव्यार्जनस्य पुरुषार्थत्वेऽपि फल कल्पनाभावात् पुरुषार्थता प्रीत्युत्सर्गे तर्हि प्रजापतिव्रतानामप्रकरणस्थानामपि फलकल्पनाभयात् क्रत्वर्थत्वमस्त्वित्येवं प्रस्तूयते । तत्र प्रतिषेधत्वादेव तावत्क्रत्वर्थत्वं युक्तमित्येतत्प्रतिपादयन् प्रतिषेधत्वं समर्थयते–'नोद्यन्तमादित्यमीक्षेतेति । नञुद्यदादित्येक्षतिधातवः कर्त्तव्यतावचनेन सम्बध्यन्ते'(२) । कर्त्तव्यतावचनः प्रत्ययः । तेन यथोद्यत आदित्यस्य प्राप्यकर्मतया सम्बन्धः यथा चेक्षतिधातोस्तेनैव करणतया सम्बन्ध ईक्षणेनादित्यं प्राप्नुयादिति । न तु परस्परं कारकाणां क्रियाग्रहणे सत्यन्योन्यसम्बन्धाभावात् । एवं नञोपि तेनैव सम्बन्धो न प्राप्नुयादुद्यन्तमादित्यमीक्षणेनेति–न त्वन्य·

(१) मी०सू० ४।१।२। (२) टुप्टी०पृ० ४।

तरकारकण । यत पर्युदासेनानीक्षणविधि स्यात् । कुत इत्याह '(१)एव'-प्रत्ययसम्बन्धे सति 'श्रुतिवृत्तानि पदानि भवन्ति न लक्षणवृत्तानि । यदा तु (२)नञुपपदयो सम्बन्धस्तदा स्वार्थं हित्वा वस्त्वन्तर लक्षयन्ति(३)' । यदा तावन्नञ्धात्वो सम्बन्धस्तदा प्रत्ययार्थस्य भावस्यानिपिद्धस्यावस्थितत्वात्करणापेक्षाया तत्करणतया द्वाभ्या सहिताभ्या स्वार्थाविनाभावात्सङ्कल्प. स्वार्थं हित्वा प्रतिपादनीय इति लक्षणा । यदाप्युपपदादित्यन नञ' सम्बन्धस्तदाऽपि तत्सन्निहितेन नञा तदतिरिक्तस्य वस्तुनो भावनाकर्म्मतया प्रतिपादनाल्लक्षणैव । उपपदा नियमाभिप्रायेण लक्षयन्तीति बहुवचनम् । येनैव केन चिदुपपदेनाख्यात परिहाय नञः सम्बन्धस्तेनैव सहासौ लक्षणावृत्ति भजेतेति । उदाहरणे बहुत्वापेक्ष वा बहुवचनम् । आदित्यसम्बन्धस्य सिद्धान्तिनाप्यनङ्गीकरणात् । (४)'अतो' लक्षणादोषात्-'प्रतिषेध'(५) । तथा च क्रत्वर्थ सम्पद्यत इत्याह-'स च प्राप्तिपूर्वकः'(६) । तत किम्-'प्राप्तिश्च दर्शपूर्णमासादिषु विद्यते सा प्रतिषिध्यते'(७) । अस्यार्थ । प्रतिषेधे ह्यवश्य प्रतिषेध्यस्य पूर्वप्राप्तिरालोचनीया । सा चालोच्यमाना प्रतिषेधस्य वैदिकत्वात्तत्सामान्येन वैदिकयेव शीघ्रमुपतिष्ठते। ततस्ताद्वेषयः प्रतिषधोऽपि तद्द्वारेण क्रत्वर्थ

(१) टु०टी०पृ० ४ ।

(२) अत्रमुद्रितपुस्तक 'नञ्धातुपदयो रिति पाठो दृश्यते ।

(३-७) टु०टी०पृ० ४ ।

इति। 'एवं च सति फलं न कल्पयितव्यम्'(१)–इतरथा तत्कल्पनागौरवं स्यात्। 'यद्यपि नैष प्रतिषेधः(२)'–किं त्वनीक्षणं नामान्तःकरणसङ्कल्परूपं नियम्यते–'तथाऽपि फलकल्पनाभयात् क्रत्वर्थं'(३)–एवायं 'नियमः'(४)।

ननु– 'एतावता हैनसाऽयुक्तो भवति(५)'–इत्येनोनिबर्हणस्य फलस्य श्रवणान्नफलं कल्पयितव्यमत आह—'फलार्थवादोऽयम्'(६)—न फलविधिः, औदुंबराधिकरणादिनिषेधात्। एतस्मिंश्च पक्षे विश्वजिदादयोऽप्यत्रोदाहरणं रात्रिसत्रादयश्च। विश्वजिदधिकरणे हि सर्वेषामनारभ्यवादानामश्रुतफलानां क्रतुसम्बन्धप्रमाणश्रुत्यादिशून्यानामफलत्वनिराकरणेन फलवत्त्वं साध्यते। तत्तु फलं न क्रतूपकारः, किं तु पुरुषार्थरूपं किमपीत्येतदधिकरणगोचरः। तद्विशेषचिन्ता तु तत्सर्वार्थमनादेशादित्यादिषु। हिरण्यं भार्यमित्यत्र तु स्थिते एतस्मिन्नधिकरणे द्वितीयार्थसंयोगाद्विधिलाघवाच्च पुनः क्रत्वर्थमाशङ्क्य निराक्रियत इत्यसङ्करो वेदितव्य इति।

'एवं प्राप्ते ब्रूमः'(७)। तत्र यत्तावदुक्तं प्रतिषेधोऽयमिति तत्राह —'नायं प्रतिषेधः'(८)। कुतः। 'तस्य व्रतमिति हि प्रकृत्य नोद्यन्तमादित्यमीक्षेतेति'(९) वचनम्। ततः किम्। 'व्रतमिति च सामान्येन कर्मोच्यते'(१०)। (११)'तत्'–तु सामान्यं 'विशेषमाकाङ्क्षमाणमनेन विशिष्यते'(१२)–यत्—

(१-१२) टुप्टी०पृ०४।

(१)'नतु'—किमपि-'कर्म'(२)-विहितं तदिदं-'नोदन्तमा दित्यमीक्षेतेत्यादि'(३)। 'प्रतिषेधे'(४)- सति-'पूर्वं'(५)-सामा न्यवचनं 'साकाङ्क्षमेवावतिष्ठेत'(६)-ततश्चाप्रमाणं स्यात्। न हि किंचित्कुर्यादित्येतावन्मात्रं कस्य चिदप्यर्थस्य प्रमाणं भव ति। न च विशेषे प्रमाणं किंचनास्तीत्यप्रमाणमेव जायेत। उपेत्यापि विशेषाक्षेपमुच्यते-(७)'तेन च' सामान्येन-'अश्रुतः कर्मविशेषः(८)'-आक्षेपेण-'गृह्येत(९)'। 'एवं च(१०)'-सति-'वाक्यभेदात्'-पूर्वोत्तरयोर्मिथः सम्बन्धाभावात् द्वाभ्या-मर्थद्वयविधानात्-'द्विरदृष्टं कल्प्येत(११)'। पूर्वत्र कल्पयित्वा पुनरत्रापि कल्प्येतेत्यदृष्टभेदेऽपि सामान्यैक्यात् क्रियाभ्यावृत्तेर भिधानमुक्तवन्तोऽष्टकृत्वो ब्राह्मणा इतिवत्।

'एवं प्रतिषेधे(१२)'-सति-'बहुसमञ्जसम्'(१३)-। 'अ (१५)तो'-ऽस्मात्—'विरोधात्त(१४)'-नञ्-'कर्त्तव्यतावचनेन सम्बध्यते। तस्मात्तु प्रत्युतस्तदनन्तरेणेक्षतिना सम्बध्यते। (१६)अतो'-ऽनीक्षणरूपो-'नियमोऽयं(१७)'-कर्तृधर्मश्चोद्यते।

नन्वस्तु नियमस्तथाऽपि कथं कर्तृधर्मः। फलकल्पनाभया त्कर्मधर्मत्वमेव युक्तमित्युक्तमत आह-'अर्थप्राप्तेन विपरिवर्त्तमा नेनास्ति कर्त्रा सम्बन्धः। श्रुत्याद्यभावान्नास्ति क्रतुना(१८)' सम्बन्धः। क्रियाक्षेपादेव हि कर्त्ताऽवगम्यते। तेन तद्गतमेव क्रियाया भाव्यमङ्गीकर्त्तुमुचितम्, न क्रतुगतम्, तस्य केन चिदपि

(१-१८) टुप्टी०पृ० ४।

प्रमाणान्तरेण बुद्धावनारोहात् । न ह्यप्रमाणकं लघ्वप्यङ्गीकर्तुमुचितम्, प्रमाणव लायातं वा गुर्वपि हातुम् । न च गौरवमस्ति। प्रकरणपठितानां ह्युपकारकाकाङ्क्षेण शब्दोपात्तेन क्रतुना सम्बन्धात् क्रियाक्षेपतः स्वरूपमात्रेणावगतेन पुरुषेण सम्बन्धो गरीयानिति नाश्रीयते । अनारभ्य विहितानां त्वत्यन्ताप्रतीतक्रतुसम्बन्धात्सोपि लघीयानेव । विधिरपि च विषयस्य समीहितसाधनत्वं बोधयन् विशेषप्रमाणाभावे साक्षादपेक्षितफलसाधनत्वमेव बोधयति । तेन नद्युत्सर्गे श्रीत्युत्सर्गेपि यद्यपि नैतेषु प्रीतिः श्रूयते गोदोहनादिवत् नापि दृश्यते द्रव्यार्जनवत्तथाप्येवं जातीयकानि कर्म्माणि पुरुषार्थाय पुरुषार्थानि ।

(१)'शास्त्रस्य' विधेः 'अनतिशङ्क्यत्वादिति । न च द्रव्यं चिकीर्ष्यते'(२)इत्यस्य व्यावर्त्यं दर्शयति-'शास्त्रस्यानतिशंक्यत्वादिति क्रत्वर्थेऽपि तुल्यत्वात्'(३) । नायं हेतुः पुरुषार्थैकान्तिक इति-'कस्य चिदाशंका स्यादिति तन्निवृत्त्यर्थम्(४)'-उक्तं-'न च द्रव्यं चिकीर्ष्यते(५)' इति । तद्व्याचष्टे-'न च क्रत्वर्थं द्रव्यं संस्क्रियते'(६)-विक्रियते वा ।दर्शनमेतत्प्राप्तिनिवृत्त्योरपि। 'येन सामर्थ्यात्तत्सम्बन्धेन'(७)-तन्मुखेन 'प्रणाड्या क्रत्वर्थता स्यात्'(८) । क्रतुसम्बन्धिद्रव्यसम्बन्धे हि सति तत्सामर्थ्यादेव

(१-२) मी०सू० ३ टुप्टी० पृ० ४ । (३-४) टुप्टी०पृ० ४ ।

(५) मी०सू० ३, टुप्टी०पृ० ४।

(६) टुप्टी०पृ० ४ । अत्र मुद्रितपुस्तके 'संक्रियते' इति पाठो दृश्यते । (७-८) टुप्टी०पृ० ४ ।

पर्णमयीत्ववत् क्रत्वर्थता स्यात् । न त्वेतदस्तीति ।

कः पुनरुत्पत्तिप्राप्तिविकृतिसंस्कृतीनां भेदः । उत्पत्तिर्नाम येनाकारेण कारकमभिधानोपात्तं तस्यासत एवोत्पादनम् । तस्यैव सतोऽप्राप्तस्य प्रापणं प्राप्तिः । तद्गतदृष्टातिशयोत्पादनं विकृतिः । तस्यैवादृष्टातिशयोत्पादनं संस्कार इति ।

'अतः पुरुषार्थान्येतानि(१)' । किं पुनरेतानि काम्यान्यथ नित्यानीति विचार्यते । तत्र कश्चित्तावदाह–'फलार्थिना कर्तव्यानीत्येवमर्थ उपदेशः'(२)एषां विश्वजिदादिवदित्यभिप्रायः। तन्निराकरोति 'नेति'(३) । न 'फलार्थिना कार्याणीत्येवमर्थ उपदेशः'(४) । किं तर्हीत्याह–'नित्यत्वेन सन्ध्योपासनादिवत्(५)' । 'एतावता हैनसाऽयुक्तो भवतीति(६)' वाक्यशेषे पापक्षयश्रवणात्प्रयोजनमेषां रात्रीणामिव प्रतिष्ठा। नोद्यन्तमिति शतृप्रत्ययो निमित्ततामेवादित्योदयस्य प्रतिपादयतीति वक्ष्यामः। तस्मान्निमित्तवशात्फलं नित्यवच्चैतद्वस्य आदित्ये तदीक्षणाभावः संकल्पयितव्यः । नोद्यन्तमीक्षेत नास्तं यन्तम् नभोमध्यगतमित्यादि । आह च—

त्रिसन्ध्यं जपताऽनेन सावित्रीं नेक्ष इत्ययम् ।
आदित्यं ध्यायता कार्यः सङ्कल्पः पापनाशनः ॥

अत्र चोदयति–यदुक्तम्–'अनीक्षणं विधीयत'–इति तदयुक्तम्–'ईक्षणाभावोऽनीक्षणं, अभावत्वाच्च कर्तव्यता न घ-

(१-३) [illegible] ४ ।

टते(१)' । अभावे हि कर्त्तव्ये विधीयमाने कर्म्मविशेषाविधाना द्व्रतप्रक्रमविरोधस्तदवस्थ इति ।

परिहरति । 'सत्यम्(२)' । नाभावस्य विधिः । भाव एव त्वत्र लक्षणया विधीयते सङ्कल्परूप इति प्रतिपादयन् लक्षणानिमित्तं सम्बन्धं दर्शयति सर्वत्र-'प्रवृत्तौ निवृत्तौ वा'(३)-कर्त्तव्यायां-'मानसं व्यापारमंगीकृत्य(४)'-पूर्वं सङ्कल्पं कृत्वा ततः-'प्रवर्त्तते निवर्त्तते वा'(५)-तेनात्राप्यनीक्षणं कुर्वाण 'आदित्यस्यानीक्षणं कर्त्तव्यमिति मनसा सङ्कल्पयति । अतोऽनीक्षणस्य'(६) ईक्षणाभावस्य-'मानसो व्यापारः (७)-'सङ्कल्पाख्यः कारणत्वात्-'अविनाभूतः । तस्याविनाभावात्(८)-' ईक्षणाभावः शब्दाभिहितः-'शक्नोति(९)'-तं-'लक्षयितुं, यथाकृतिर्व्यक्तिम् (१०)' । तेनेह संकल्पो विधीयत इति ।

ननु स्पर्शादीनामपि क्रियात्वादीक्षणव्यतिरिक्तत्वेन च तदभावसम्बन्धात्किमिति न लक्षणेत्याशंक्याह-'स्पर्शादीनाम-

---

(१-६) तु० टी० पृ० ५ ।

(१) अत्र-'न च क्रत्वर्थत्वं द्रव्यं संस्क्रियते येन सामर्थ्यात् तत्सम्बन्धेन प्रणाड्या क्रत्वर्थता स्यात् । अत पुरुषार्थान्येतानि फलार्थिना कार्याणि इत्येवमर्थ उपदेश, तन्नेति । नित्यत्वेन सम्बन्धो यागनादिवत् । एतावता हेनसाऽयुक्तो भवतीति अनीक्षणं विधीयते । ईक्षणाभावो ऽनीक्षणम् । अभावत्वाच्च कर्त्तव्यता न घटते' इति तन्त्ररत्नानुसारी टुप्टीकायाः पाठः प्रतिभाति ।

(७-१०) तु० टी० पृ० ५ ।

भावसम्बन्धानामपि (१)तदविनाभावस्याभावान्न तेषां कर्त्तव्यता'(२)। तेन नोद्यन्तमादित्यमित्यस्य वाक्यस्य नायमर्थः- उद्यन्तमादित्यं स्पृशेदिति, किं तूद्यन्त नेक्ष इति सङ्कल्पयेदिति।

'अपि च, पुरुषप्रयत्नः कृतिः(३)-'इत्यादिभाष्यं व्याचष्टे- 'कृत्वर्थत्वे(४)-' सति-'विधायकः कर्मोत्पत्तिमात्रनिष्ठ एव भवेत्(५)'। उत्पत्तिग्रहणं विनियोगस्याप्युपलक्षणार्थम्। 'एवं च (६)-' सति-'यदेवास्य तादृर्थ्यप्रतिपादकत्वम्(७)'- प्रयोगप्रतिपादकत्वमित्यर्थः-'तदेव हीयेत(८)'। न त्वनेन विनियोजकत्वहानिरभिधीयते। अङ्गविधीनामपि विनियोजकत्वाभ्युपगमात्। न हि प्रयोगवचनेनाङ्गत्वं सिध्यति। अङ्गं सत्प्रयोगवचनेन गृह्यत इति न तु प्रयोगवचनादङ्गत्वम्। यस्मात्प्रयोजकत्वं हीयेतेत्ययमेवार्थः। कुतो हीयेतेत्याह-'प्रयोगवचनेन कृतत्वात्। तस्मात्स पक्षो ग्रहीतव्यो यत्र विधायकोऽर्थवान् (९)'। एवं च ये प्रयोजकत्वं मा कल्पीति विश्वजिदादीनां काम्यत्वमिच्छन्ति ते निराकृताः प्रयोजकत्वस्यैव समर्थनीयत्वात्तत्सिद्ध्यर्थं नैमित्तिकत्वमेव युक्तमिति।

---

(१) टु० टी० पृ० ५। अत्र मुद्रितपुस्तके 'तदभावाविनाभावाभावान्न' इति पाठो दृश्यते। (२) टु० टी० पृ० ५।

(३) शबरः पृ०४३९। अत्र'इति'रिति पाठो मुद्रितपुस्तकयोर्न दृश्यते।

(४-९) टु०टी०पृ०५। (९)अत्र'अर्थवान्' इति स्थाने मुद्रितपुस्तके 'अर्थत्वात्' इति पाठोऽस्ति।

यत्त्विह समिदादीनामङ्गत्वसमर्थनं तत्प्रजापतिव्रतवैषम्यप्रदर्शनमात्रार्थं न तु प्रतिपाद्यतयेति मन्तव्यम् । प्रकरणाधिकरणे प्रतिपादितत्वात् । यदि चात्र प्रतिपाद्येताधिकरणभेदः स्यात् । अतश्च ये चतुर्थेसिद्धं प्रधानापूर्वेदमर्थ्यमङ्गानामंगीकृत्य प्रकरणाधिकरणं करणैदमर्थ्यप्रतिपादनमात्रपरं मन्यन्ते ते यद्यत्रत्यमभिधानमङ्गीकृत्य तथा मन्यन्ते तर्हि न युक्तम् ।

अथ पुनरिज्याधिकरणं तत्सन्निधावसंयुक्तं तदङ्गं स्यादित्यतेदङ्गीकृत्य तथापि न युक्तम्, इज्यामात्रप्राधान्यनिराकरणपरत्वात्तस्य ।

सांग्रहण्यधिकरणे च 'फलवद्वोक्तहेतुत्वादितरस्य प्रधानमिति'(१) फलवदङ्गत्वमितरस्य प्रसाधितपूर्वं वदन्निज्याधिकरणविषयत्वमस्येति दर्शयति । किञ्चैवंवादिनामनर्थकमेव प्रकरणाधिकरणमापन्नम् ।

किं हि तेन प्रतिपाद्यम् । करणैदर्थ्यमिति चेत् । केन प्रमाणेन । प्रकरणेन । किं पुनः प्रकरणं–'प्रधानापूर्वमितिकर्तव्यताकांक्षं प्रकरणम्'(२)–इत्युक्तं भाष्यकारेण । कथं पुनस्तेन करणैदमर्थ्यमवकल्पते प्रधानापूर्वं हि स्वशब्देन सन्निहितैः प्रयाजादिभिरुपसर्ज्जनीभूतैः प्रधानतयान्वितमभिधीयमानं तेषां स्वार्थत्वं स्वपदावगतकरणाविरोधात्करणतया न सम्भवतीति तत्सिद्ध्यर्थं स्वापे-

(१) मी० सूत्र ४।४।७ । (२) शबर० पृ० २९२।१५ । कर्त्तव्यस्य इतिकर्तव्यताकाङ्क्षस्य वचनं प्रकरणमिति मुद्रितभाष्यपुस्तके पाठः ।

क्षितिकर्त्तव्यतांशत्वं तेषामाक्षिप्तप्रकरणार्थत्वं परिकल्पयतीति चेत्-एवं तर्हि नियोगाक्षेपोऽत्र प्रमाणमुक्तं स्यात्, प्रोक्षणादीनामिव करणैदमर्थ्ये। स चतुर्थाद्ये साधित इति न पृथगधिकरणमपेक्षते। तेन संयुक्तानां क्रत्वर्थत्वपरिकल्पनमुपादानम्, असंयुक्तानां तु प्रकरणमिति संज्ञाविशेषः कामं क्रियताम्। अधिकरणद्वितयं तु न्यायाभेदादयुक्तम्। प्रोक्षणादीनामपि क्रत्वङ्गभूते व्रीह्यादौ श्रुत्यादिभिर्विनियुज्यमानानां तत्प्रमाणकमेव क्रत्वर्थत्वमिति कृतमुपादानेन तादर्थ्यप्रमाणेन। तस्माच्छ्रुत्यादीन्येव तादर्थ्ये प्रमाणम्। अपूर्वार्थत्वेऽपि तान्येव प्रमाणम्, न तु ग्राहकग्रहणं नाम किञ्चित्। प्रयाजादीनामपि प्राकरणिकमेवापूर्वभावनाङ्गत्वम्। तदेव च प्रकरणाधिकरणे व्युत्पाद्यते। अत एव भाष्यकारः-'प्रजापतिव्रतानां श्रुत्याद्यभावात्पुरुषार्थत्वम्'(१)-इत्याह। इतरथा ग्राहकग्रहणाभावादित्येवावक्ष्यदित्यलमनया प्रसङ्गागततीर्थान्तरदूषणकथाविस्तरप्रस्तावनया। तत्सिद्धं-'प्रजापतिव्रतानि पुरुषार्थानीति'(२)।

## ४—यज्ञायुधानामनुवादताधिकरणम्।

## द्रव्याणि त्वविशेषेणानर्थक्यात् प्रदीयेरन्॥ ७॥

( पूर्वपक्षसूत्रम् )

उक्तं पूर्वाधिकरणे तथा च लोकभूतेष्वित्यस्मिन् सूत्र-

(१) शाबर०पृ०।

(२) शाबर०पृ० ४४०।

ऽसंयुक्तानां फलेन प्रकरणात्क्रत्वर्थत्वम् । स्फ्यादीनामप्येतानि वै दश यज्ञायुधानीतिफलासंयुक्तानां विहितानां प्रकरणेन विनियोगात्प्रधानार्थत्वं प्रसक्तं निवार्यत इति सङ्गतिः । अध्यायसङ्गतिश्च प्रयुक्तिविशेषफलतया ।

पूर्वपक्षे हि प्रधानप्रयुक्तानि स्फ्यादीनि सिद्धान्ते तूद्धननादिप्रयुक्तानीति । ननु तृतीय एवैषां यथासंयोगं विनियोगेनोद्धननाद्यर्थत्वं सिद्धम् । अतः किमन्यच्चिन्त्यते इत्यत आह–

'प्रदेयत्वे इह निराकृते तृतीये चिन्ता'(१)–किं सर्वमुद्धननादि सर्वैः कार्यमुत यथासंयोगमिति । इह तु प्रदेयत्वमेवाशङ्क्य निराक्रियते इति ।

पूर्वपक्षमाह–'एतानि वै दश यज्ञायुधानीति विधिरयं'(२)–यागसाधनतया स्फ्यादीनामप्राप्तानाम्–कुतः–'स्वार्थत्वात्'(३)–यज्ञायुधशब्दस्य श्रुत्यर्थलाभात् । 'इतरथा'(४)–यद्युद्धननाद्यङ्गतया प्राप्तानामनुवादः ततः–'परार्थता'(५)–लक्षणार्थता–'स्यात्'(६)–यज्ञसम्बन्ध्युद्धननाद्यायुधेषु यज्ञायुधशब्दः स्यात् । तदेव विवृणोति–'यद्येतानि'(७)–स्फ्यादीनि–'प्रदीयमानानि'(८)–सन्ति–'यागं निर्वर्त्तयन्ति ततो भवन्ति यज्ञसाधनानि'(९) ।

तथाऽपि कथं यज्ञायुधशब्दो मुख्यः। न हि साधनमात्रमायुधशब्देनोच्यते। अत आह–'साधनवचनोऽयं'(१०)–यज्ञायुधशब्दोऽतः–'तत्र'(११)–प्रदेयत्वपक्षे–(१२)'आयुधशब्दो'–भवति–

(१-११) टु०टी०पृ० ५। (१२) अत्र 'यज्ञायुधशब्द.' इति टुप्टीकाधृत पाठः सम्यक् प्रतिभाति।

'मुख्यः'(१)-सन् यत्साधनवाचिनाऽऽयुधशब्देन साधनत्व-सामान्याद्यज्ञसाधनमभिधीयते गौणवृत्त्या । तस्य च गौणत्वं राद्धान्तेऽपि समानम् । यज्ञशब्दस्तु पूर्वपक्षे मुख्यः सिद्धान्ते तु सोऽपि लक्षणयेत्याह-'इतरथा'(२)-यदि मदेयत्वं नोच्यते ततः-'मणाड्या'(३)-यज्ञसाधनानुसाधनमिति कृत्वा-'गौणः स्यात्'(४) । लक्षणैव गौणशब्देनोच्यते, जघन्यवृत्तिसामान्यादिति ।

'अविशेषेणेति'(५)-सूत्रपदमपि शब्दमुपश्लिष्य व्याचष्टे । 'यागसाधनत्वाविशेषेऽपि प्रधानयागसाधनान्येव । कथम् । एतानि वै दश यज्ञायुधानीत्येतानि पदानि साकांक्षाणि प्रकरणेन प्रकृतेन दर्शपूर्णमासयागेन सहैकवाक्यतां यान्ति'(६) एतानि दश यज्ञायुधानि । तस्मादेतैः प्रधानयागः कर्त्तव्य इति । 'अतो नैषां प्रयाजादिभिः'(७)-अङ्गैः-'सम्बन्धः'(८) ।

'अथ वैतानि वै दश यज्ञायुधानीति'(९)-कर्त्तव्यपदमध्याहृत्य पूर्णमेव वाक्यम् । तत्तु-(१०)'दर्शपूर्णमासप्रकरण आम्नानात्प्रधानस्यैवाङ्गम्'(११)-प्रकरणेन-'न प्रयाजादीनाम्'(१२)।

---

(१-४) टु०टी०पृ० ५ । (५) मी०सू० ४।१।७।

(६) टु०टी०पृ० ५ । अत्र मुद्रितपुस्तके इत्थं पाठो दृश्यते-'एतानि वै दश यज्ञायुधानीति 'दर्शपूर्णमासयोराम्नानात्प्रधानस्यैवाङ्ग' साकांक्षाणि प्रकरणेनैकवाक्यतां यान्ति' । (७-१२) टु०टी०पृ० ५ ।

(१२) अत्र 'टुप्टीकायां 'दर्शपूर्णमासयोराम्नानात्' इति पाठो वर्त्तते ।

ननु यज्ञशब्दस्य यागमात्रवाचित्वात्तदनुवादेन विधीयमानानि द्रव्याणि प्रकरणबाधेन वेदितद्धर्मादिवदङ्गप्रधानार्थानीति युक्तमत आह–'यद्धवींष्यासादयतीत्यर्थप्राप्तमासादनमनूद्य वेदिर्निगम्यते'(१)–वेद्यां हवींष्यासादयतीति–'अङ्गप्रधानहविषां'(२)–च सर्वेषां—'आसादनमर्थप्राप्तम्। तस्मात्तत्र–'(३) प्रकरणबाधेन'–वाक्यादङ्गप्रधानार्थता–'(४) युक्ता। इह तु–'एतानि वै दश यज्ञायुधानीति न किंचिदनूद्यते'(५) येन सर्वानुवादेन विधीयमानानि द्रव्याणि सर्वार्थानि भवेयुः।

नन्विहापि यो यज्ञ इति सकलयज्ञानुवादेन तस्यैतान्यायुधानीतिविधानात्सर्वार्थता युक्ता। नेत्याह–'न खलु समासान्तर्गतयोः'(६)–पदयोः–'एकमुद्देशकमितरच्च विधायकं भवितुमर्हति'(७)–तिनिर्णीतमेतद्वपट्कर्त्तुः प्रथमभक्ष इत्यत्र। अतो न यज्ञशब्देनोद्दिश्यायुधशब्देन विधानम्।

अथ सकलेन समासपदेनार्थप्राप्तं यज्ञसाधनसामान्यमनूद्यैतानीतिविशेषविधिरित्युच्यते–तदप्यसत्। अप्राप्तत्वात् सामान्यस्य। सर्वेष्वेवाग्नेयादिषु पुरोडाशादिद्रव्यविशेषविधानात्। अथ तथाविधेषु कथं द्रव्यान्तरविधानम्। को दोषः। व्रीहियववद्विकल्पो भविष्यति।

ननूत्पत्त्युत्पन्नशिष्टयोर्न विकल्पो न्याय्यः। समुच्चयस्तर्हि भवतु। सोऽपि न। निरपेक्ष्य विधानात् सत्यमेव तत्।

(१-७) तु० टी० पृ० ५।

एवं तु मन्यते--सर्वथा तावद्यज्ञायुधसंयुक्तं वाक्यं मुख्यार्थलाभात् द्रव्यविशेषकरत्वाच्च विधिः । न च श्रुतानि पदानि विधौ निराकांक्षाणीति प्रकृतेनैकवाक्यतां यान्ति गत्यन्तराभावात् । यदपि यज्ञायुधानि कर्त्तव्यानीतिवाक्यं परिपूर्यते तदपि प्रकरणेन गृह्यते साकांक्षत्वात् । न हि यज्ञान्तरविधानेनार्थवत्ता सम्भवति, देवताभावात् । वाजिभ्यो वाजिनमिति हि यागान्तरविधानेन गतिसम्भवात्नोत्पत्तिशिष्टामिक्षावरुद्धे वैश्वदेवयागे गुणान्तरविधानसम्भवः । इह त्वनन्यगतित्वादवश्यं भाविनि प्रकृतसम्बन्धे गत्यन्तराभावादिकल्पो भवत्विति । 'एवं सति संख्या चैकक्रियायोगादुपपत्स्यते' (१)-दश यज्ञायुधानीति सर्वत्र हि केन चिदेकेनाभिन्नेन संख्याद्वृत्तिर्भवति । तदिहैकयागसम्बन्धाद्दुपपत्तिः ।

सिद्धान्ते तूद्धननादिनानार्थसम्बन्धात्संख्यानुपपत्तिः ।

अयं च सूत्रार्थः-द्रव्याणि स्फ्यादीनि प्रदीयेरन् प्रधानयागसाधनानि स्युः । अन्यथा आनर्थक्याद्यज्ञायुधशब्दस्य । अर्थशब्दोऽभिधेयवचनः, अभिधेयत्यागप्रसङ्गात् लाक्षणिकार्थत्वापत्तेः । अथ वाऽनुवादत्वेनाप्रवृत्तिविशेषकरत्वात् । अथ वा संख्याशब्दानर्थक्यादिति-तथाऽपि कथं प्रधानार्थत्वम् । अविशेषविधानात्सर्वार्थत्वं युक्तमत उक्तमविशेषेणेति । अविशेषेणापि विधीयमानानि प्रधानार्थान्येव प्रकरणादिति भा-

(१) तु० टी० पृ० ६ ।

व्यमप्यविशेषेणेत्याद्येवं व्याख्येयम् । 'अविशेषेणापि विहितं प्रकरणेन'(१)—प्रकरणादित्यर्थः—'प्रधानस्य भवितुमर्हतीति'(२) ।

यद्वाऽविशेषेणेतिप्रधानार्थत्वे युक्तिरुक्ता । यदि हि विशेषेणाङ्गमुद्दिश्य विधीयेरंस्ततोऽङ्गार्थानि स्युः, अविशेषविधानात्तु प्रकरणात्प्रधानार्थानीति ।

( सिद्धान्तसूत्रम् । )

## स्वेन त्वर्थेन सम्बन्धो द्रव्याणां पृथगर्थत्वात्तस्माद्यथाश्रुति स्युः ॥ ८ ॥

'करणविभक्त्या स्फ्येन किमपि कर्त्तव्य'(३)–मित्यपेक्षिते–'(४)पदान्तरेण'–उद्धन्तीत्यनेन–'(५)उद्धनने दत्ते'–प्रयोजनं प्रति–'निराकांक्षत्वान्नान्यत् प्रयोजनमाकांक्षति'(६)–निराकांक्षस्य न यागेन सम्बन्धः ।

ननु यागार्थत्वेऽपि प्रतीयमाने कथमुद्धननादिनैव नैराकांक्ष्यं न यागेनात आह–'वाक्येनैषां'(७)–स्फ्यादीनां–'उद्धननादिप्रयोजनम्'(८)।श्रुतावेव वाक्यव्यवहारः पूर्वोक्तनयेन सर्वत्र नेतव्यः । 'प्रकरणेन क्रतुसम्बन्धो भवेद्वा न वा'(९) ।

---

(१–२) शबर० पृ० ४४१ । (३–७) टु० टी० पृ० ५ ।

(७) अत्र 'वाक्येन' इत्यस्य स्थाने मुद्रितपुस्तके 'वाक्यात्' इति पाठोऽस्ति । (८–९) टु० टी० पृ० ६ ।

द्रव्येष्वप्रिफरणाविशिययोजयत्वाभावान्न भवत्येवैषां यागार्थत्वे प्रकरणं प्रमाणं भवदपि वाक्याद्दुर्बलमिति ।

ननु क्रतुसम्बन्धोऽपि वाक्यादेव । 'साकांक्षाणि'(१)-ह्येतानि पदानि-(२)प्रकृतेनैकवाक्यतां यान्ती'(३)-त्युक्तं तत्राह-'(४)आयुधशब्दोऽपि आयुधेष्वेव' शकटादिषु-'प्रसिद्धो लक्षणया स्फ्यादिषु वर्त्तते'(५) । लक्षणेति गौणत्वमभिधानं जघन्यवृत्तिसामान्यात् । केन पुनः सादृश्येन गौणत्वम्-'तान्यपि'(६)-आयुधानि-'साधनान्येतान्यपीति'(७) । तेन वाक्यमप्येतद्गुणवृत्त्याश्रयत्वात्प्रकरणापेक्षत्वाद्ध्याहारापेक्षत्वाच्च दोषत्रयग्रहीतादुद्धननादिवाक्याद्दुर्बलमिति तादर्थ्यमेवैषां न यागार्थत्वमिति ।

किं च-'न तु विद्यमाने'(८)-उद्धननादिद्वारेण यज्ञायुधत्वेऽनुवादे च सम्भवति । 'विधौ लक्षणा न्याय्या'(९)-अनुवादे तु लक्षणा न दोषः । युक्त्यन्तरं समुच्चिन्वन्नुपसंहरति । 'अतः स्तुतित्वादनुवादोऽयम्'(१०) । अस्ति हि विधिर्यज्ञायुधानि सम्भरतीति । तेन स्तावकतयैकवाक्यभूतमवगम्यमानम् पृथग्विधित्वमर्हति वाक्यमिदमसङ्गात् । अत उद्धननादिद्वारप्राप्तयज्ञायुधत्वानुवाद एवायमिति ।

यत्तु दश संख्या नावकल्पेत इति तत्राह-'संख्या चासादनाभिप्राया'(११) । यदेतदनन्तरेण यज्ञायुधानि सम्भ-

(१-२) टु० टी० पृ० ५ । अत्र 'प्रकृतेन' इत्यस्य स्थाने 'प्रकरणेन' इति पाठो मुद्रितपुस्तके । (३-११) टु० टी० पृ० ६ ।

रतीत्यनेन विधिनाऽऽसादनं विहितं तेनैकेनाभिसम्बन्धात्संख्यावृत्तिरिति सूत्रमपि यस्मात्स्वेन स्वेनोद्धननादिनार्थेन सम्बन्धो द्रव्याणामेषां श्रूयते तस्मात् पृथगर्थत्वावगमाद्यथाश्रुति उद्धननादिश्रुत्यनुरोधेन तद्द्वारेणैतानि यज्ञायुधानि स्युर्न साक्षादिति।

यद्वा केन विशेषेणोद्धननादिवाक्यस्य विधित्वं न यज्ञायुधवाक्यस्येत्यत आह—'पृथगर्थत्वात्'(१)। पृथगर्थे ह्येते वाक्ये न तुल्यार्थे। एकत्र विधिश्रवणादन्यत्र तदभावादिति।

यद्वा विधित्वे सति पृथगर्थत्वेन वाक्यभेदप्रसङ्गादनुवाद इति।

यद्वा संख्योपपत्तिरियमुच्यते। पृथक्प्रयोजनत्वादेषां न तदैक्यनिबन्धना संख्या। तस्माद्यथाश्रुति आसादनश्रुत्यनुरोधेन संख्याभाञ्जि स्युरिति।

## चोद्यन्ते चार्थकर्मसु ॥ ९ ॥

अत्र भाष्यकारेणार्थकर्मस्वाग्नेयाग्नीषोमीयादियागेषु पुरोडाशादीनि चोद्यन्ते तैरेषां न विकल्पः पाक्षिकबाधप्रसङ्गात्। न समुच्चयो निरपेक्षविधानादित्युक्त्वा पुनर्वर्णकान्तरमुक्तं परिधानीये कर्मणि पात्राणां दर्शनमवदेयत्वेनावकल्पत इति।

तत्र यदिदं पाक्षिकबाधनं विकल्पदूषणमुक्तं तन्न शोभनम्। तुल्यबलविकल्पस्य ह्येतदृशं दूषणमुचितं नत्वत्रेत्यभिप्रायेणाह—

(१) मी०सू० ४।१।८.

'अयुक्तोऽयं विकल्पो विषमशिष्टत्वात्'(१)। तेनार्थकर्मसु पुरोडाशादीनि चोद्यन्ते-तानिच बलवन्तीत्येवं सूत्रं नेतव्यं न पाक्षिकबाधाभिप्रायामिति।

द्वितीयमपि वर्णकमयुक्तमित्याक्षिपति-'द्वितीयेऽपि वर्णके'(२)ऽस्त्येवानुपपत्तिः। कथम्। पूर्वपक्षे-'मध्यात् पूर्वार्द्धाच्च द्विरद्यतीति'(३)-वचनेन-'तावन्मात्रस्य होमाच्छिष्टं विद्यते। तेन यजमानो धक्ष्यते'(४)। ततः पारिधानीये कर्म्माणि पात्रदर्शनमुपपद्यते। 'नैतदेवम्'(५)। कुतः-'मरणस्यानियतत्वात् कदाचित्'(६)-दीर्घकालेऽपि म्रियमाणे सति स्फ्याद्या'कारविनाशः स्यात् बहुश्यवदानोद्धरणात्। तत्र यज्ञपात्रता नोपपद्यते'(७)। स्फ्यादिजातीयं हि द्रव्यं यज्ञपात्रम्। जात्यपगमे तदनुपपत्तिः।

अथ वा देवतोद्देशेन द्रव्यपरित्यागान्निरिष्टिकानि'(८)। श्यवदानमात्रेऽपि हि हूयमाने सकलस्य यजमानस्वामित्वमपेतम्। 'तस्मात्प्रतिप्रयोगमुत्पादयेरन्'(९)। एकप्रयोगोपयुक्तानामनीशानेन यजमानेन पुनस्त्यागायोगात्। 'तन्त्रान्तरे म्रियमाणो न तैर्दह्यते'(१०)। ननु सर्वैरेव दह्यतामत आह-'निरिष्टिकान्यव्युत्पादानुपशक्तो निरिष्टिकत्वादेव'(११) न हि निरिष्टिकेन शिष्टाः कार्यं कुर्वन्तीति।

ननु वचनबलेनाचारं बाधित्वा निरिष्टिकैरेव धक्ष्यत इत्याशङ्क्य परिहारमाह-'अथ वा श्यवदाने उद्धृते पादशम-

(१-३) टु०टी० पृ० ६. (४-११) टु०टी० पृ० ६.

विकलं सत् पूर्वं'(१)-अवदानोद्धरणात्-'यज्ञसाधनमभूत्'(२)-पश्चादवदानात्-'मरणवेलायां न तादृक्'(३)-विकलत्वादि'ति यज्ञपात्रता नोपपद्यते'(४) । पूर्वं जात्यपगमोऽभिहित इदानीं त्वेकावदानोपादानेन मा नाम जातेरपगमस्तथाऽपि यज्ञपात्रस्वरूपभेदात् यज्ञपात्रैश्च दहन्तीत्यनुपपन्नं स्यादित्युच्यते-'उद्धननाद्यर्थत्वे तु न किञ्चिद्विरुद्धम्'(५) । न हि तत्र निरिष्टिकत्वदोषोऽप्यस्तीत्येकादशे वक्ष्यामः । तस्मादुद्धननाद्यर्थान्येवेति ।

## लिङ्गदर्शनाच्च ॥ १० ॥

'चतुर्दशत्रयोदशेत्युभयत्र'(६)-पूर्वपक्षे सिद्धान्ते च-'तुल्यं' (७)-लिङ्गं नैकस्यापि पक्षस्य साधकं नापि बाधकम् । कुतः-'न हि (८)द्रव्यमात्रभेदादाहुतिभेदः । एकदेवतात्वात्सर्वैरेकैवाहुतिः'(९)-करिष्यते सान्नाय्यवत् ।

'तत्र केचिदाहुः-उत्पत्तिवाक्यशिष्टेन'(१०)-पुरोडाशादि-'(११)द्रव्येण बाधितत्वात्'-स्फ्यादीनि वाजिनवत्-'कर्मान्तरं' (१२)-कल्पयन्तीत्यस्य वाक्यस्य कर्म्मान्तरमेव पूर्वपक्षे विधेयं-'आपततीति'(१३)-लिङ्ग-'दर्शनं'(१४)-मुपपन्नमिति ।

---

(१) अत्र 'अविकलं सत्' इत्यस्य स्थाने 'सत्' इत्येव मुद्रितामुद्रितपुस्तकधृतः पाठोऽस्ति । (२-५) टु०टी०पृ०६. (६-७) टु०टी०पृ०६.
(८) मुद्रितामुद्रितटुप्टीकापुस्तकयो 'मात्र' शब्दस्य पाठो नोपलभ्यते।
(९-१४) टु:टी० पृ० ७.

तदेतदेकदेशिमतं दूषयति-'इदं नोपपद्यते । न हि द्रव्यसंयोगमात्रेण'(१)-देवतान्तरेण-'कर्मान्तरं भवति'(२) । न चात्र देवताविधायकं वचनं मन्त्रवर्णो वाऽस्ति । न चाव्यक्तत्वात्सौमिकविध्यन्तप्राप्त्या देवतालाभः । दर्शपौर्णमासिकेष्वङ्गेषु सौमिकविध्यन्तातिदेशस्य विहितकालबाधप्रसङ्गेन(३) न्यायरत्नमालायां निरस्तत्वात् । एकदेशिनां चाङ्गेषु लिङ्गाद्विध्यन्तातिदेशमिच्छतां लिङ्गाभावे सुतरामिदमयुक्तमभिधातुम् । न ह्यत्र सोमधर्मातिदेशे पशाविव प्रयाजादिदर्शनं किञ्चिल्लिङ्गमस्तीति नातिदेशसम्भवः ।

तस्मादन्यथा वर्ण्यते-'चतुरवत्तं जुहोतीति प्राकरणिकेषु सर्वहोमेषु चतुरवत्तम्'(४)-विहितं चतुरवत्तमिति विवक्षितसङ्ख्यानिर्देशः । एकं चतुरवत्तं होमाङ्गतया विहितमिति । 'तत्रेमानि'-इत्यादीनि-'दश द्रव्याणीतरेतरयुक्तानि होमसाधनानि'(५), न व्रीहियववन्निरपेक्षाणि, सहविधानात् । 'तत्रैषां प्रतिद्रव्यमवदाने गृह्यमाणे बहूनि चतुरवत्तानि भवन्ति । होमे चैकं चतुरवत्तं श्रुतम्'(६) । सोऽयं परस्परव्याघातः । तदाह-'तत्'(७)-'चतुरवत्तं-'यद्येकस्माद्गृह्येत'(८)-एकवचनानुरोधेन तत-'इतरेषां'(९) सह विध्यवगतं-'साधनत्वं हीयेत'

(१-२) तु० टी० पृ० ६.
(३) पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः ।
यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः ॥
(४-९) तु० टी० पृ० ७.

(१)। यदि तदनुरोधेन सर्वेभ्यो गृहीत्वा हूयेत तत एकत्वं ही· येतेत्यपि वक्तव्यम् । अर्थसिद्धत्वात्तु नोक्तमिति । 'तस्मात्तत्' (२)-उभय-'संपत्तयेऽभ्यस्यते याग एकैकेन चतुरवत्तेन'(३) तस्माद्गृहीतेन । एवं ह्युभयमुपपादितं भवति—यच्च सर्वेषां साधनत्वं यच्चैकचतुरवत्तसाधनत्वम् ।

'ननु बहूनि'(४)-चतुरवत्तानि-'गृहीत्वा सकृद्धोष्यते दे- वतैक्यात्'(५) । न किञ्चिद्विरोत्स्यते-'यथा सान्नाय्ये द्वे चतु· रवत्ते'(६)-गृहीत्वा सकृत् होमः । 'उच्यते । तत्र'(७)-सा· न्नाय्ये चतुरवत्तविघातो नास्तीति परेण सम्बन्धः । कुत इत्याह-'कर्मभेदात्'(८) । द्वे हि तत्र कर्मणी सहानुष्ठीयेते । ततः किम् । इदं ततो भवति-'अन्येन'(९)प्रदानेन-'सह' (१०)अन्यस्मिन्—'प्रदाने क्रियमाणे इतरदपि'(११)— प्रदानं-'आत्मीयं चतुरवत्तं(१२)'-इतरस्मात्-'विवेकेन-' (१३)असङ्करेण गृह्णाति इतरदपि विवेकेन । 'तत्र चतुरवत्तवि- घातो नास्ति'(१४)-तत्रेत्युपन्यासार्थः । द्वाभ्यां चतुरवत्ताभ्यां द्वयोः कर्मणोः सहानुष्ठीयमानयोरैकैकस्यैकैकसाधनत्वमविह- तमेवेत्यभिप्रायः । 'इह त्वेकत्वात्कर्मणः'(१५)-सर्वैश्चतुरवत्तैः- 'सह'(१६)-संहत्यानुष्ठाने-'क्रियमाणे'(१७)-सति-'चतुरवत्त- विघातभयादभ्यस्यते सोमयागवत् । तत्राहुतिबहुत्वात्'(१८)- चतुर्दर्शत्रयोदशेति-'दर्शनं नोपपद्यते'(१९) ।

---

(१-१९) तु० टी० पृ० ७.

. पशाविदानीं का वार्त्ता । न हि तत्र सान्नाय्यवद्यागभेदः समस्ति । तेन तत्रैकादशभिरवत्तैः सहानुष्ठाने सत्येकत्वविघातभयादभ्यासः प्रसज्यते । न प्रसज्यते । चतुरवत्तैकत्वस्य सिद्धान्ते प्रकृतावार्थिकत्वेनाशास्त्रीयत्वात् । एकस्य हि यागस्यैकमेव पुरोडाशादिप्रकृतौ हविः । तन्मध्यपूर्वार्द्धनिष्पन्नस्य चतुरवत्तस्यैकत्वं सिद्धमेव न विधेयम् । यच्च प्रकृतावार्थिकं न तच्चोदकः प्रदिशति । हविरेकत्वनिबन्धनं हि प्रकृतौ चतुरवत्तैकत्वं न वाचनिकं, पशौ तु हविर्भेदाच्चतुरवत्तभेदे सति सर्वैरेव सह हूयत इति नानुपपन्नम् ।

पूर्वपक्षे तु स्रुग्यादीनां दशानामेकयागसाधनत्वात्तन्निष्पन्नानां चतुरवत्तानामप्राप्तमेकत्वं नानुवदितुं शक्यत इत्यवश्यं चतुरवत्तं जुहोतीत्यनेनैव विधातव्यमिति तत्संपत्तयेऽभ्यासः प्रसज्यत इति स्थिते लिङ्गदर्शनमिति । एतच्च चतुरवत्तं होमसाधनत्वेन विधीयते इति भाष्यकारमतमङ्गीकृत्योक्तम् ।

स्वमते तु चतुरवत्तोद्देशेन होमः संस्कारो विधीयते इत्युद्देश्यैकत्वस्याविवक्षितत्वात्संभवत्येव सहहोम इति परिधानीये कर्मणि लिङ्गदर्शनं व्याख्येयम् । पूर्वसूत्रस्य तु प्रथममेव व्याख्यानम् ।

५-पश्वेकत्वादेर्विवक्षाधिकरणम् ।

( पूर्वपक्षसूत्रम् )

## तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात् ॥ ११ ॥

ननु वस्तुतोऽर्थगुणभूतोऽप्यमूर्तोऽप्यरुणिमानतदर्थः किं तु तृतीयाश्रुत्या करणत्वावगमात् क्रियार्थ एव । द्रव्यपरिच्छेदद्वारेणोपपन्नमेव तादर्थ्यमित्यरुणाधिकरणे प्रतिपादितं तत्कथमर्थस्य गुणभूतत्वावगमादयज्ञाङ्गमेकत्वमित्युच्यते । तत्राह-'अरुणो गुणः' (१)-एकहायन्यादिपदात्-'पदान्तरेण'(२)-अरुणापदेन-'उपात्तत्वाद्भवति क्रियार्थः । एकत्वस्य विभक्तिश्रुत्या प्रातिपदिकार्थत्वान्न क्रियार्थता'(३)-किं तु द्रव्यार्थता । 'अद्रव्यस्य'(४)-क्रियायाः पदान्तरेणोपात्तत्वात्-'वाक्येन'(५)एकत्वं-'अङ्गं स्यात्'(६) । तच्च श्रुतेर्दुर्बलम् । तस्मान्न क्रियार्थमिति । नात्र वास्तवमर्थपारतन्त्र्यमक्रियार्थत्वे युक्तिः येनारुणाधिकरणगोचरता स्यात् । किं त्वेकपदोपादानलक्षणया श्रुत्याऽर्थस्य प्रातिपदिकार्थस्य गुणभूतमवगम्यमानं न वाक्येन यज्ञाङ्गं भवितुमर्हतीति । 'पश्वादीनामङ्गं विवक्षितं तथाऽपीति'(७)-चोद्यभाष्यं तदनुपपन्नं वाक्यभेदप्रसङ्गात् । न हि सकृदुच्चरितो विधिशब्दः क्रियां विदधाति, पश्वङ्गं च संख्याम् । विध्यावृत्तौ च वाक्यभेदप्रसङ्गः । तथा पशुरपि यागसंख्ये प्रत्युपादानोद्देशादिविरुद्धत्रिकयोगी स्यादत आह-'अन्तर्णीताभिसम्बन्धे सकृदुच्चरिताभिप्रायः परिचोदयति'(८)-अन्तर्णीतैकत्वस्य पशोः क्रियासम्बन्धा-

---

(१-२) टु० टी० पृ० ७.

(३) टु० टी० पृ० ७। अत्र मुद्रितटुप्टीकाग्रन्थ 'क्रयार्थता' इति पाठो दृश्यते ।          (४-८) टु० टी० पृ० ७

देकत्वविशिष्टपशुविशिष्टो यागः सकृदुच्चरितेन विधिना वारवन्तीयविशिष्टं करोति शब्दार्थविशिष्टयागवद्विधीयते इति । तथा च क्रियाङ्गमादरणीयं स्यादत आह–'अङ्गस्य'(१)–यागाङ्गस्य पशोः–'यदुपकारकं'(२)—एकत्वं–'भवति तत्प्रणाड्याऽपि' (३)–यद्यपि न साक्षादुपकारकं तथापि प्रणाड्याऽपि तावत्-क्रियाया अप्युपकारकम्'(४) । विशिष्टस्य हि क्रियाङ्गस्य विशेषणमन्तरेणासिद्धेर्विशेषणमप्यादरणीयमिति । एतदुक्तं भवति-पशुर्हि वाक्येन क्रियार्थत्वादुपादेयः । स यथाश्रुत एव क्रियार्थमुपादेयः । स च करणत्वेनैकत्वेन च विशिष्टः श्रुतः क्रयणमिवारुणादिभिः । अतो यथा करणभूतस्यैवोपादानमेवमेकत्वयुक्तस्यापि । (५)तत्पशावेवमुपादीयमान एकत्वमपि क्रियार्थत्वं करोति । विनापि तस्य करणत्वेनातादिदमौपादानिकमेकत्वस्याङ्गत्वम् । 'न पश्वादीनामङ्गेनोक्तेनानुक्तेन वा किंचिदस्ति प्रयोजनमिति'(६)-परिहारभाष्यं तस्य–'कोऽभिप्रायः'(७) । एकः पशुसंख्ययोः सम्बन्धः तस्मिन्विवक्ष्यमाणे–'सम्बन्ध एकस्मिन् क्षणे'(८)-प्रातिपदिकार्थेन संख्याकारकयोर्युगपद्विशेषणत्वेन सम्बन्धे सति–'क्रियापश्वोः सम्बन्धो नास्ति'(९) । कारकं हि क्रियया सम्बध्यते न द्रव्यम् । कारकं चेत् द्रव्यविशेषणं तद्विशिष्टं द्रव्यं कृदन्तकरणादिशब्दाभिहितमिव न

(१-४) टु० टी० पृ० ७ (५) तदसात्रेव-क-ख ।
(६ ९) टु० टी० पृ० ७.

क्रियया सम्बन्धमर्हति। तेन पशोरपि क्रियाङ्गत्वाभावात् दूरापेतमेकत्वस्य क्रियाङ्गत्वम्। अथ पशुरेव कारकविशेषणं सत्कारात्मना क्रियया सम्बध्यते, संख्या च पशुविशेषणमेव सती क्रियया सम्बध्यते इत्युच्यते तथापि क्रमेण क्रियासंख्याभ्यां पशोः सम्बन्धो युगपद्वा। क्रमे तावद्दूषणमाह– 'क्रियापशुसम्बन्धोत्तरकालं पशुसंख्ययोः सम्बन्धे शुद्ध एव पशुः(१)'–क्रियया– 'सम्बध्यते'(२)–न संख्याविशिष्टः। ततश्च पशुमात्रेण यागस्य सगुणत्वात्संख्यानादरः स्यात्। अथ तन्त्रेण पशुः क्रियासंख्याभ्यां सम्बध्यते तथाऽपि संख्यानुरक्तस्य क्रियान्वयात्स एव दोषः। वैरूप्यं च पशोः स्यादित्याह–'तन्त्रसम्बन्धे सकृदुच्चरितत्वात्'(३)–पशुशब्दस्य युगपदेव–'पशोः स्वार्थपरार्थता स्यात्'(४)। विरुद्धत्रिकद्वयोपलक्षणमेतत्। क्रियासम्बन्धे हि पशोः स्वार्थत्वमुपादानं विधानं च स्यात्। संख्यासम्बन्धे तु परार्थमुद्देशोऽनुवादश्च–'श्रुत्यादिदोषश्च तदवस्थ एव'(५)। योऽयं श्रुत्यर्थेन समानपदोपात्तेन पशुनैव सम्बन्धः संख्याया न वाक्यार्थेन यागेन, तत्र यागस्य संख्यानिवृत्तावपि वैगुण्याभावात्संख्यानादरः स्यादिति दोषोऽभिहितः। स तन्त्रसम्बन्धेऽपि तदवस्थ एव न त्वपगत इति। 'तस्मादक्रियाङ्गं संख्येति'(६)। न चैकत्वविशिष्टस्य पश्चात्करणत्वम्। करणैकत्वयोर्युगपदभिधा-

---

(१) अत्र 'क्रियापशुसम्बन्धोत्तरकाल'मिति पाठशालीयपुस्तकपाठः।
(१-६) टु० टी० पृ० ७.

नात् । अत एवाभिप्रायादाह भाष्यकारः—'पश्वङ्गेन ह्यविपन्नेन प्रयोजनं, विपन्नेऽपि हि पश्वाद्यङ्गेऽविगुण एव क्रतुर्भवति'(१)।

अत्र कश्चित्पुनरेवमुपादानशेषत्ववाद्याह—यद्यप्येकत्वं प्रातिपदिकार्थगतमेव विभक्तिरभिधत्ते न क्रियाकारकतया तथापि नाविवक्षितम् । अस्यापि ग्राहकग्रहणेनापूर्वसमर्थं तावदापादितं तथाप्यस्य केन द्वारेण निर्वहतीति द्वारापेक्षायां सङ्ख्येयावच्छेद एव लिङ्गाद् द्वारमवगम्यते । पशुरपि यागाङ्गतया विहितोऽपरिच्छिन्नस्य तत्साधनत्वायोगात्परिच्छेदकमपेक्षते । तत्स्थतया चैकत्वमवगम्यते । तत्रैकत्वस्यात्मार्थत्वनिर्वाहाय नियोग एवास्य करणीभूतपशुसम्बन्धित्वमाकाङ्क्षतीति नाविवक्षितमिति ।

तदयुक्तम् । न ह्येकत्वस्य ग्राहकग्रहणं सम्भवति । पशुविशेषणत्वादन्विताभिधाने हि ग्राहकग्रहणं, नच योग्यताधीनम् । न च पशुविशेषण परेणान्वेतु योग्यमेतेन यथाजादीनामपि ग्राहकग्रहणं प्रत्यूहम् । अपि चैवं ग्रहैकत्वमपि विवक्षितं स्यात् । तत्रापि हि ग्राहकग्रहणेन विधेयद्रव्यार्थगतमेव । तत्रापि द्वारापेक्षायां ग्रहस्थत्वेनावगतस्य लिङ्गावगतसङ्ख्येयपरिच्छेदद्वारस्य स्वार्थेन कर्तुं संमार्गकर्मीभूतग्रहसम्बन्धं नियोग एवाक्षिपतीति तुल्यं वक्तुम् ।

ननु ग्रहस्य नास्ति परिच्छेदकापेक्षा । प्रकरणस्थानां ग्रहाणां परिच्छिन्नत्वादिति चेत् । मा भूद् ग्रहस्यापेक्षा । एकस्य तु

(१) शाबर० पृ० ४४३

ग्राहकग्रहणापादितविध्यैदमर्थ्यसिद्ध्यर्थं द्वारमपेक्षमाणं ग्रहमेव द्वारमवलम्बिष्यते। तत्स्थतयाऽवगमादन्यतराकाङ्क्षाऽपि हि सम्बन्धकारणमेव।

अपि च ग्रहस्यापि संमार्गसम्बन्धे परिच्छेदकापेक्षा विद्यत एव किंसंख्यो ग्रहः संमार्ष्टव्य इति। न हि ज्योतिष्टोमसम्बन्धिनां सङ्ख्याऽवगतेत्येतावता संमार्गसम्बन्धिनामप्यवगता भवति। तेन यदि श्रुत्या वाक्येन वा द्रव्याङ्गतया क्रियाङ्गतया वाऽविहितस्यैव पश्वेकत्वस्य ग्राहकग्रहणावगता पूर्वाङ्गत्ववशेनैव करणीभूतपश्वर्थत्वमाक्षिप्यते ततो ग्रहैकत्वस्याप्याक्षिप्यत एव। यदि तु वाक्येनैकत्वस्य विधिरुच्यते तत उद्देश्यस्थस्य विधौ वाक्यभेदादविवक्षा युक्ता। आक्षेपलभ्यं तु न वाक्यं भिनत्तीतिदुर्वारा विवक्षा स्यादतोऽवश्यं विवक्षाविवक्षे पशुग्रहैकत्वयोरिच्छता वाक्येनैव क्रियाङ्गतया पश्वेकत्वस्य विधानमभ्युपेयं, तच्च न सम्भवतीत्युक्तम्। तस्मादविवक्षितमिति।

( सिद्धान्तसूत्रम् )

## शब्दवत्तूपलभ्यते तदागमे हि दृश्यते तस्य ज्ञानं यथाऽन्येषाम् ॥ १५ ॥

यदुक्तं विभक्तिश्रुत्यैकत्वस्य द्रव्यार्थत्वान्न वाक्येन क्रियार्थता युक्तेति तन्न, क्रियार्थत्वस्यैव श्रौतत्वादित्याह-'विभक्तिर्हि लिङ्गसंख्याप्रातिपदिकार्थानां'(१)-त्रयाणामपि-'श्रुत्यैव क्रि-

(१) टु०टी०पृ० ८।

यार्थतामाह'(१)-न केवलं प्रातिपदिकार्थस्यैव। यतस्तस्य क्रियार्थतामभ्युपेत्य संख्यादेर्नाभ्युपेयते। विभक्त्यर्थेन हि कारकेण प्रातिपदिकार्थस्य समानपदोपादानप्रत्यासत्त्या सम्बन्धः स्यात्। विभक्त्यर्थस्य तु संख्यादेरेकाभिधानोपात्तस्य ततोऽपि प्रत्यासन्नतरः सम्बन्धः। ततश्च पशोः क्रियार्थत्वमभ्युपेत्य सङ्ख्याया नाभ्युपेयते इति दुर्घटम्। किञ्चैकेनाभिधानेन युगपदभिधीयमाने संख्याकारके मिथोऽन्विते एवाभिधीयेतेऽन्यथा युगपदभिधानायोगादक्षादिष्वदर्शनादतोऽविधानादेव कारकतया प्रतीयमानस्यैकत्वस्य क्रियार्थत्वं श्रौतमेव न वाक्यगम्यत्वेन दुर्बलीकर्तुं शक्यते। क्रियाविशेषमात्रं त्वत्र वाक्यादवगम्यतेऽरुणादिवदिति क्रियार्थत्वं श्रौतमेव। प्रत्युत पश्वर्थत्वमेव दुर्बलं, तद्धि पदश्रुत्या स्यात्। कारकान्वयस्त्वेकाभिधाननिबन्धन एव। आभिधानिको वा। तच्च पदश्रुतेर्बलीय इति। यदुक्तं--

तथा पश्वङ्गमेकत्वं पदश्रुत्या प्रतीयते।

समानप्रत्ययश्रुत्या बलीयस्या क्रियाङ्गता॥ इति

लिङ्गस्यापि संख्यया तुल्यप्रायन्यायत्वात्सहैव सिद्धान्तोऽभिधीयते। या तु का चिद्विशेषाशङ्का तामवसरे वक्ष्यामः।

ननु यद्यपि सर्वेषामेषां क्रियार्थत्वं यथायोगं पदश्रुत्याऽभिधानश्रुत्या वाऽवगम्यते तथाऽपि क्रियाया एकेनैव नैराकाङ्क्ष्यादितरानादरः स्यात्तत्राह-'क्रिया साध्या। साधनं तत्परि-

(१) टु०टी०पृ० ८।

च्छेदकानि च लिङ्गसंख्यादीन्यपेक्षते(१)' । तेन श्रुत्या सर्वेषां क्रियार्थताऽवगम्यते । क्रियामपि सर्वाणि कारकाण्यपेक्षन्ते । 'अतः सर्वविशेषणविशिष्टा क्रियैव विधीयते'(२) । न तु कारकाण्यन्योन्यस्य विशेषणम् । यतः पश्वङ्गमेकत्वं न क्रियाङ्गं स्यात्परस्परान्वयस्त्वरुणैकहायन्यादिवदेकैककर्म्यादेव प्राप्तः पदश्रुत्यानूद्यत इति वेदितव्यम् । यत एव क्रियायाः साधनतत्परिच्छेदकापेक्षाऽत एवैतदपि न चोदनीयं समानाभिधानोपात्तलिङ्गसंख्यावरुद्धं कारकं न पदश्रुतिगम्यं पशुमाद्रियेतातः पशोः कारकत्वं न स्यादिति । न हि तन्मात्रेण निराकाङ्क्षं कारकमवगतं भवतीति। विद्यते हि पुंस्त्वधर्मकेणैकत्वोपेतेन यष्टव्यमित्युक्तेऽपि किंजातीयं तद्यदेवंसंख्याकमेवंलिङ्गकं चेत्यपेक्षा । तत्र प्रातिपदिकेनोपनीयमानः पशुर्दुर्बलप्रमाणकोऽप्यनुगुणत्वादङ्गीक्रियते । अतस्त्रयविशिष्टा क्रिया विधीयत इति ।

नन्वविहितेषु विशेषणेषु कथं तद्विशिष्टक्रियाविधिरत आह–'तत्र विधिप्रत्ययः पूर्वं विशेषणेषु(३)व्याप्रियते' । कथमित्याह–'अन्यथाऽनुपपत्त्या'(५) । किं नोपपद्यत इत्याह–'न ह्यगृहीतविशेषणाविशेष्ये(५) बुद्धिरिति'(६) । विशिष्टविषयस्तावद्विधिर्दृश्यते । न चासावविहितेषु विशेषणेष्ववकल्पत इति पूर्वनिष्पन्नो

(१) लेखपुस्तके 'साधने' इति पाठः । (२–६) टु०टी०पृ० ८ ।

(५) अत्र मुद्रितपुस्तके 'विशेष्ये' इत्यस्य स्थाने 'विशिष्टे' इति पाठो दृश्यते ।

विधिः कल्प्यत इति। एवं तावद्यत्पूर्वपक्षेऽभिहितं श्रुत्या पश्वर्थत्वाव-गमाच्च वाक्येन क्रियार्थत्वं युक्तमिति तत्त्वतो बलीयस्या श्रुत्यैव क्रियार्थत्वावगमात् परिहृतम् । इदानीमस्तु नाम वाक्येन क्रियार्थत्वं तथापि न दोषः श्रुतिवाक्ययोरविरोधादित्याह—'पश्वेकत्वयोरुपश्लिष्टलक्षणया'(१)—उपपदलक्षणया—'श्रुत्या विशेषणविशेष्यभाव एवावगम्यते, न तु तादर्थ्यम्'(२)। न हि विधिमन्तरेण श्रुत्यादिमात्रात्तादर्थ्यं सिध्यति। न च पशुसंख्यासम्बन्धस्य विधिरस्ति। श्रुतस्य विधेर्यागतद्विशेषणमात्रनिष्टव्यापारस्य संख्यापद्रूव्य-सम्बन्धविधावसामर्थ्यात् क्रियातद्विशेषणव्यतिरिक्तानां चार्थविधिमाजनत्वात्। वाक्येन तु विध्यनुग्रहीतेन क्रियां प्रति तादर्थ्यमवगम्यते । 'अतः(३)'—श्रुतिवाक्ययोः—'एकविषयोपनिपाताभावादविरोधः । तस्मात्'(४)-आह भाष्यकारः—न श्रुतिर्द्रूते वाक्यार्थो न भवतीति'(५) । अत्र पूर्वपक्षे एकश्रुतित्वाचेति सूत्रे(६) 'एकां गां दक्षिणामि'(७)त्यत्र एकशब्दोपादानं विभक्त्यर्थस्यैकत्वस्याविवक्षायां लिङ्गमुक्तं तत्परिहारभाष्यं 'गोसङ्ख्यासम्बन्धं विधातुमेतदुच्यते इतरथा गोदक्षिणासम्बन्धो विहितोऽवगम्येतेति'(८)—तदनुभाष्य व्याचष्टे—'यदि गां दक्षिणां दद्यादित्येतावद् श्रूयेत ततोऽश्वादीनां परिसङ्ख्या स्यात्'(९)।

(१-४) टुप्टी०पृ० ८। (५) शबर०पृ० ४५५।
(६) मी० सू० ४-१-१२। (७) शबर० पृ० ४४३।
(८-९) टुप्टी०पृ० ८।

गवाश्वादिषु दक्षिणात्वेन प्राप्तेषु पुनर्गोर्दक्षिणात्वं निमित्ते विधीयमानमन्यनिवृत्तिपरं भवतीति । एकशब्दोपादाने तु गामुद्दिश्यैकत्वविधानात् तत्रैव द्वादशशतसंख्यामात्रनिवृत्तिः स्यान्न त्वश्वादिनिवृत्तिरिति तदर्थमेकग्रहणं चोदयति गामित्येतावत्यपि श्रुते प्रत्ययवाच्या–'सङ्ख्यैव विधीयते(१)'–गोगता–'न तु गौः'(२)। अतोऽत्रापि सङ्ख्यान्तरस्यैव निवृत्तिर्न त्वश्वादेरिति चेत्—

'तन्न । संख्याविधाने हि सति गोसंख्ययोः सम्बन्धो विधातव्यः(३)' । गामुद्दिश्य संख्या विधातव्या भवति । न च तद्युक्तम् । एकपदे ह्युद्देशोपादानविभागो नावकल्पते । किं च 'तद्विधाने च'(४)–विधेः–'क्रियायामननुप्रवेशः'(५)। न हि सा निर्गुणा वा सगुणा वा स्वरूपेण वाऽन्यत्र वा विधीयते । न च तस्यामन्यः–'तत्रात्यन्तं वाक्यं स्यात्'(६)–ददातिपरेण प्रत्ययेन गोसंख्यासम्बन्धे विधीयमाने न तु श्रुतिलेशः कश्चित् । 'तस्मात् यद् दक्षिणां दद्यात् तद् गामितीयं वचनव्यक्तिर्गृह्यते श्रुत्यनुग्रहाय(७)' । अस्यां हि वचनव्यक्तौ क्रियायामेकपदोपात्तायां द्रव्यविधानादस्ति श्रुत्यनुग्रहः । 'इतरथा(८) तु गामुद्दिश्य संख्याविधिरिति(९)'–इय वचनव्यक्तिः त्यज्यते ।

चोदक आह–'एतदपि(१०)'–समाधानं–'यद्वा तद्वा(११)'–न युक्तमित्यर्थः । कुत इत्याह––'कस्मात्(१२)'–कारणात्–

---

(१-१२) टु०टी०पृ० ८।

(१०) अत्र 'इतरथा' स्थाने 'इतरत्र' पाठो मुद्रितपुस्तके दृश्यते ।

'क्रियायामेव(१)'–दक्षिणादानात्मिकायां–'संख्या न विधीयते, येन गोसंख्ययोः सम्बन्धो विधातव्यः स्यात्(२)' । शक्यते हि गामित्येकवचनोपात्तमेकत्वं दानोद्देशेन विधातुमिति।

एकदेशी समाधत्ते–'उच्यते संख्या विधीयमानासंख्येयद्वारेण'(३)–क्रिया–'साधनं भवति । तत्र(४)'–दक्षिणायां 'बहूनि(५)'–गवाश्वादीनि–'संख्येयानि(६)' सन्ति । तत्र 'सा(७)' संख्या 'न ज्ञायते(८)' गवादीनां मध्ये 'कस्य परिच्छेदिका(९)' सती दक्षिणासाधनमिति । ततश्च गामिति गोगतत्वं बाध्येत नियमेनाप्राप्तेरनुवादासम्भवात्, विधाने च वाक्यभेदापत्तेः ।

अथ गवा संख्यया च विशिष्टं कारकं दाने विधीयते तथा सत्येकत्वेन संख्यान्तरस्य गवा चाश्वादीनां परिसंख्या स्यात् ।

चोदक आह–'अश्वादीनामुत्पत्तौ(१०)'–दक्षिणोत्पत्तिवाक्य एव एकत्व–'संख्या विद्यते(११)' । अतः 'तत्र(१२)' पौनरुक्त्यात् 'न निवेक्ष्यते गवां तु न'(१३) एकत्वं 'विद्यते(१४)' । अतो दक्षिणोद्देशेन विहितमेकत्वं विनापि वचनेन गोगतं भवतीति तद्गतत्वमनुवदितुं शक्यमित्यन्तरेणाप्युपपन्नमेकशब्दं क्रियायामेकत्वविधानमिति।

---

(१-१४) टु०टी०पृ० ८ ।

(२) अत्र 'सम्बन्धं विधातव्यं स्यात्' इत्यस्य स्थाने 'सम्बन्धः' इत्येव पाठो मुद्रितपुस्तके ।

एकदेश्याह–'गवामपि(१)' यद्यपि नैकत्वं विद्यते तथाऽपि 'द्वादशशतसंख्या विद्यते(२)' । अतस्तत्र तद्विरोधान्न निवेक्ष्यते। यथेतरेषु पौनरुक्त्यादिति।

चोदक आह–'चोदकेन(३)' गवां द्वादशशतप्राप्तिर्नैमित्तिकस्य नित्यविकारत्वात्। अतस्तदौपदेशिकेनैकत्वेन प्रत्याम्नायत–'इति चेत्(४)'।

एकदेश्याह–'इतरेषां(५)'–अश्वादीनां–'अपि चोदकेनैव (६)'–एकत्वप्राप्तिः । सा चानुमानिकी यावन्नैकत्वं प्रापयति तावदेव प्रत्यक्षवचनेन विधीयमानमेकत्वं न पुनरुक्तमिति। चोदकः स्वाभिप्रायं स्फोरयति-'तेषां(७)' अश्वादीनां 'एकत्वेन युक्तानां'(८) चोदकादेव प्राप्ते–'अनर्थिकौपदेशिक्येकत्वसंख्येति चेत्(९)'—

एकदेश्यपि स्वाभिप्रायमाविष्करोति–'उच्यते–इयं'(१०) औपदेशिकी संख्या 'प्रत्यक्षत्वात् शीघ्रं'(११) अन्यस्यामप्राप्तायां 'प्राप्स्यतीति'(१२) नानर्थिका । या त्वातिदेशिकी 'सा(१३)' प्राप्तायामन्यस्यां प्राप्यमाणा 'अनुवादः(१४)' । तेन सैव काममनर्थिका न त्वियमिति तेन क्रियोद्देशेन विहिता संख्याऽश्वादिष्वपि प्राप्नोत्येवेति गव्येव संख्यां विधातुमेकग्रहणमिति ।

तदिदमेकदेशिसमाधानं नातीवहृदयङ्गमम् । यद्यपि हीयं प्रत्यक्षत्वात् शीघ्रं प्राप्नोति तथाऽप्यन्यथाऽपि प्राप्स्यतोऽर्थस्य विधान-

(१-१४) टु० टी० पृ० ९।

मनर्थकमेव। न वार्थवत्त्वे सम्भवति तद्युक्तम्। सम्भवति च गोनिवेशेनार्थवत्ता। तेन क्रियोद्देशेनापि विहितमेकत्वं वचनं विनाऽप्यर्थवत्त्वलिप्सयैव गवि निविशत इति अनर्थकमेवैकग्रहणं स्यात्। तस्मादन्यथा समाधत्ते—

'अथ वा यदि गौरेव'(१) केवला दक्षिणायां-'प्राप्नोति, ततोऽपि गोविधानमयुक्तं(२)' स्यादानर्थक्यात्। नत्वेतदस्ति। 'प्राप्नुवन्ति ह्यन्यान्यपि(३)' अश्वादिद्रव्याणि। तेन यदि गां दक्षिणां दद्यादित्येतावन्मात्रं वचनं स्यात्तथा सत्येतदेव न शक्यते वक्तुमेकत्वमेव विधीयते न तु गौरिति प्रत्युत प्रातिपदिकार्थस्य मुख्यत्वात् प्रधानत्वाच्च गोरेव विधानं प्राप्नोति न त्वेकत्वस्य जघन्यत्वगुणत्वाभ्याम्। तदाह-'तस्मान्नास्तीदं गौर्न विधीयते संख्यैव विधीयत(४) इति'। किं तु विपरीतमेव स्यात्। 'अतो(५)'-ऽसत्येकग्रहणे दक्षिणात्वेन गोविधानात्-'नियमात्'(६)-अवश्यं 'परिसंख्या स्यात्। अन्येषां'(७)-अश्वादीनाम् 'तन्निवृत्त्यर्थमाह-एकाञ्चामिति'(८)। एकग्रहणे हि सति सिध्यति गोसंख्यासम्बन्धविधेरश्वादीनामनिवृत्तिरिति दशमे वक्ष्यामः। तदर्थवदेकग्रहणम्।

अधिकरणान्तरं वा।

कः पुनः संख्यातो लिङ्गस्य विशेषः शङ्क्यते येनाधिकरणान्तरं क्रियते? लिङ्गस्यापि प्रातिपदिकार्थत्वे पदलक्षणया

(१-८) टु० टी० पृ० ९।

श्रुत्या पशुत्ववत्प्रत्ययार्थत्वे तु एकत्ववत् प्रत्ययलक्षणया श्रुत्या क्रियार्थत्वं सिद्ध्यत्येव ।

भवत्वेवम् । न त्वेतदन्यतरस्याप्यऽभिधेयमिति पूर्वपक्षवादी मन्यते । न तावत् प्रातिपदकस्य, व्यभिचारात् , सिंहः सिंही सिंहमिति लिङ्गत्रयेऽपि प्रयोगात् । अव्यभिचाराद्धि जातिमात्रमेव तदर्थः । नापि सुप्प्रत्ययस्य, व्यभिचारादेव । सुप्प्रत्ययो हि प्रातिपदिकमात्रात् प्रयुज्यते न तु लिङ्गविशेषमपेक्षते । न च टावादीनां सुब्विकाराणां च 'तस्माच्छसो नः पुंसि'(१)-'नपुंसकाच्च'(२)-जश्शसोः शि'(३)रित्येवमादीना लिङ्गाभिधायित्वं व्यभिचारादेव । विलिङ्गेऽपि हि प्रयुज्यते श्रद्धा वृक्षः कुण्डानीति । विपरीतलिङ्गेऽपि मक्षिकेति । पुंस्यपि प्रयुज्यते दारानिति च स्त्रियाम् । तस्मादिदं स्त्रीलिङ्गमिदं नपुंसकलिङ्गमिदं पुल्लिङ्गमिति विशेषाश्रयणं शब्दानुशासनमात्रार्थं न तु वस्तुतः कस्य चिदपि लिङ्गमभिधेयमिति नास्य क्रियाङ्गत्वमिति ।

सिद्धान्तस्तु-यद्यपि प्रातिपदिकेन लिङ्गं नोच्यते नापि सुप्प्रत्ययमात्रेण तथाऽपि टाबादिभिः सुब्विकारैश्च क्वचिच्च प्रातिपदिकविकारैस्तिसृचतस्रादिभिरभिधीयत एव । तदागमे हि दृश्यते लिङ्गविशेषज्ञानं-सिंही कुक्कुट इति स्त्रीलिङ्गपुल्लिङ्गज्ञानात् । तस्मादनन्योपायत्वाच्च शब्दशक्तिरेव कल्पयितव्या ।

यस्तु विलिङ्गे प्रयोगः स गौणः । तथा विपरीतलिङ्गेऽपि द्रष्ट-

(१-३) पाणिनीयसूत्राणि-६-१-१०३, ७-१-१९, ७-१-२० ।

व्यम्। तस्मादस्यापि क्रियार्थत्वं सिद्धम् । इदं चाधिकरणं स्पष्टत्वाद्वार्तिककारेण न व्याख्यातम्। एवमुपरिष्टादपि सर्वत्र द्रष्टव्यम्।

## ६-आश्रयिणामदृष्टार्थताधिकरणम् ।

## आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत ॥ १८ ॥

एकदेशेनान्यदीयं द्रव्यं देवतामुभयं वा श्रयन्ति संस्कुर्वंति ये पदार्थास्त आश्रयिणः । तेषु संदेहः किं दृष्टार्था एवैते उताद्दृष्टार्था अपीति । तत्रोदाहरणाक्षेपव्याजेन पूर्वपक्षमाह-'अनुदाहरणं स्विष्टकृद्'(१) । कुतः, केवलदृष्टार्थत्वेनादृष्टार्थत्वायोगात् । तदाह-'मंत्रस्तावत्(२)'-'अयाळग्निरित्यादि.' (वाज०सं०७।१९)-'इष्टदेवतासंकीर्तनाद्दृष्टार्थः'(३) । यागोऽपि दृष्टार्थ एवेत्याह-'आकीर्णकरस्य द्रव्यस्य'(४) पुरोडाशादेरिष्टशिष्टस्य 'अनियमेन प्रतिपादने प्राप्ते योगेन प्रतिपाद्यते'(५) प्रतिपादनं क्रियते । तेन'योऽसौ'(६) आहवनीये द्रव्य-'प्रक्षेपः सोऽपि दृष्टार्थ एव । अतो यागेन द्रव्यस्य संस्क्रियमाणत्वात्'(७) केवलदृष्टार्थस्य स्विष्टकृतो 'नेतरैः'(८) समिदादियजिभिः 'तुल्यता'(९) यतस्तदविशेषेणाश्रयिष्वपि भावोर्थः प्रतीयेतेत्युच्येत ।

अथ समिदादय एवोदाहरणम् । तत्राह-'समिदादयोऽपि नोदाहरण,तेषु द्रव्यदेवतस्य गुणभूतत्वात्क्रियैव प्रधानभूता'(१०)। अतस्ते नाश्रयिशब्देनाभिधीयन्ते इत्यनुदाहरणमिति ।

(१-१०) टु० टी० पृ० ६ ।

अथ पशुपुरोडाशयागो वपायागो वोदाहरणम् । न हि तत्र स्विष्टकृद्वत् द्रव्यप्रक्षेपस्य दृष्टार्थत्वमित्यभिमायः ।

तत्राह'-पशुपुरोडाशयागोऽपि देवतासंस्कारद्वारेणैव'(१) प्रधानस्य'उपकरोति'(२) अतस्तस्यापि नादृष्टार्थता । यागो हि चोदितो न तदेकदेशः। स च देवतोद्देशद्रव्यत्यागात्मा देवतासंस्कारेणैव निराकांक्षः। तदेकदेशस्तु द्रव्यत्यागो चोदितत्वान्न पृथक् प्रयोजनमपेक्षते येनादृष्टार्थता कल्प्येत।'वपायागस्य तु यागान्तरत्वे प्रमाणं नास्ति'(३)। पशुयाग एव हि वपया हृदयादिभिश्च विततः सन् क्रियते। स च नाश्रयी। 'तस्मादेषोऽपि' (४)वपायागो (५)'अनुदाहरणम्'। उत्तमप्रयाजोऽपि पशुपुरोडाशन्यायेन निराकर्त्तव्यः। तस्मान्न किञ्चित् दृष्टादृष्टार्थं कर्मास्तीति।

समाधत्ते-'यत्राकृतार्थं द्रव्यं देवता स्विष्टा वक्ष्यमाणा वा' (६) पशुपुरोडाशयागवत् 'कीर्त्यते यागान्तरं च तदुदाहरणम्' (७)। अकृतार्थत्वं च द्रव्यस्यातिशयार्थमुक्तम्। कृतार्थेऽपि हि द्रव्ये स्विष्टकृति त्यागांशस्यादृष्टार्थता समर्थयिष्यत एव। अकृतार्थे तु द्रव्ये प्रक्षेपस्यापि हि दृष्टार्थाभावादतिशयेनादृष्टार्थता वक्तुं शक्यते। कथमित्याह-'पशुपुरोडाशस्य देवतोद्देशेन यः प्रक्षेपः तस्यादृष्टादृते नान्यत्प्रयोजनमस्ति(८)'। यो हि मंत्रेण देवतोद्देशस्तन्मात्रेण देवता तत्र स्मर्यते। त्यागप्रक्षेपयोस्तु न

(१) अत्र लेख्यमुद्रितपुस्तकयोः 'संस्कारेण' इत्येव पाठः।
(१-८) तु० टी० पृ० ९

किं चिद्दृष्टमस्ति ।

यत्त्ववयवस्याचोदितत्वात् न पृथक् प्रयोजनापेक्षेति-तन्न । यद्यप्यवयवस्य स्वरूपेण चोदना नास्ति तथाप्यवयवी तावद् चोदितः । स च सर्वावयवोपेतः कर्त्तव्यः । तस्य चैकेनैवावयवेन दृष्टप्रयोजननिवृत्तेरवयवान्तराणामदृष्टमन्तरेण कर्त्तव्यता न घटत इत्यदृष्टं कल्प्यम् । एवमुत्तमप्रयाजे स्विष्टकृति च वेदितव्यम् । स्विष्टकृत्यपि हि यद्यपि मंत्रासेचनयोर्दृष्टमेव प्रयोजनं त्यागस्य तु न किं चिद्दृष्टमस्तीत्यदृष्टार्थता । 'तस्माददृष्टार्था एते'(१)-पशुपुरोडाशादयः । 'अत आह' (२)सूत्रकारः-'आश्रयिष्ववि-शेषेण भावोऽर्थः प्रतीयेत' (३)'यागादपूर्वं चोद्येतेत्यर्थः'(४) । भाव्यत इति भावोऽपूर्वं सोऽर्थः प्रयोजनं प्रतीयेतेत्यक्षरार्थः ।

अविशेषेणेति हेतुं व्याचक्षाणो भाष्यकारो भूतभव्यन्यायं(५) दर्शयति-तदयुक्तं, संस्कारकर्मसु तस्याचोदितत्वात् । कर्मैव हि

(१-४) टु० टी० ९ । (३) मी० सू० ४-१-१८

(५) वस्तुतो भूतं भव्यायोपदिश्यत इत्यस्य न्यायस्य संज्ञा यथोक्तमत्रैव टुप्टीकायाम् । सर्वज्ञात्ममुनिभिरित्थं संक्षेपशारीरके (१.१४३) वर्णितोऽयं न्यायः—

भूतं भव्यप्रधानं भवति हि न पुनः स्वप्रधानं कदाचि-
च्छास्त्रस्थाः शब्दशक्तिस्थितिनिपुणधियो विस्तरादेवमाहुः ॥

तथा च तट्टीकायां "भूतं भव्यायोपदिश्यत इति जैमिनिशबरस्वामिनोर्मतं तौ च वेदार्थनिर्णयेऽधिकृताविति तदुक्तमेव ग्रहीतुमुचितमित्यभिप्रेत्याह—भूतमिति" ।

एष न्यायो वेदान्तिभिरपि स्वीकृतः । यथा च तत्रैव (१-३१२)-

तत्र भव्यमपि द्रव्यदेवतं भूतमपि प्रतिगुणभूतमित्युक्तं "यैस्तु द्रव्यं चिकीर्ष्यते" इत्यत्र अत आह–'भूतं द्रव्यं भव्यां क्रियां निर्वर्त्तयतीति क्रियातोऽदृष्टम्'(१)। यद्यपि पशुपुरोडाशयागस्य देवता संस्कार्या तथाऽपि द्रव्यस्य तादर्थ्यात्तन्निष्पाद्ययोस्त्यागासेचनयोरदृष्टमेव प्रयोजनमिति देवताभिप्रायमपि वा शक्यत एव भाष्यं व्याख्यातुमित्याह–'अथवा यद्यपि यागो देवतां संस्कुर्वन्नुपकरोति तथाऽपि साधनतां प्रतिपद्यमाना(२)' देवता यागस्य 'आश्रयो भवति(३)' संस्कार्या भवति 'नान्यथा। अतः(४)' संस्कार्यत्वपक्षेऽपि द्रव्यदेवतस्य भूतस्यैव क्रियासाधनत्वात्साधनस्य च साध्यार्थत्वमौत्सर्गिकमित्यभिप्रेत्य यैस्तु द्रव्यं चिकीर्ष्यत इत्यत्रोक्तमपवादमनादृत्य सामान्यन्यायप्रदर्शनार्थमुक्तं–'भूतं भव्यायोपदिश्यत इति(५)'।

दर्शितं च तस्मिन्नुत्तरसूत्रेण यैस्तु द्रव्यमित्युक्तमपवादं पूर्वपक्षत्वेन प्रदर्श्य तदुत्तरत्वेनात्रस्यासिद्धान्ततत्वं स्याद्वा द्रव्य-

---

भव्याय भूतमिति किञ्च विधिप्रधाने
काण्डे नयोऽयमिह तद्विपरीतमाहुः।
भूताय भव्यमिति भूतपरं हि सर्वं
वेदावसानमिति सूत्रकृदाचचक्षे॥

विशेपतस्तन्त्रवार्त्तिके (२–१–५) पञ्चपादिकाविवरणव्याख्याने तत्त्वदीपने (पृ० ३५७ द्वितीयवर्णके) च द्रष्टव्यम्।

(१) टु० टी० पृ० ९ (२–५) टु० टी० पृ० १०

(५) अत्र द्वितीयाध्यायप्रथमपादचतुर्थसूत्रभाष्यं द्रष्टव्यम्।

किं चिददृष्टमस्ति ।

यत्त्ववयवस्याचोदितत्वान्न पृथक् प्रयोजनापेक्षेति-तन्न । यद्यप्यवयवस्य स्वरूपेण चोदना नास्ति तथाप्यवयवी तावत् चोदितः । स च सर्वावयवोपेतः कर्त्तव्यः । तस्य चैकेनैवावयवेन दृष्टप्रयोजननिष्पत्तेरवयवान्तराणामदृष्टमन्तरेण कर्त्तव्यता न घटत इत्यदृष्टं कल्प्यम् । एवमुत्तमप्रयाजे स्विष्टकृति च वेदितव्यम् । स्विष्टकृत्यपि हि यद्यपि मंत्रासेचनयोर्दृष्टमेव प्रयोजनं त्यागस्य तु न किं चिददृष्टमस्तीत्यदृष्टार्थता । 'तस्माददृष्टार्था एते'(१)- पशुपुरोडाशादयः । 'अत आह' (२)सूत्रकारः-'आश्रुतिप्वविशेषेण भावोऽर्थः प्रतीयेत' (३)'यागादपूर्वं चोद्येतेत्यर्थः'(४) । भाव्यत इति भावोऽपूर्वं सोऽर्थः प्रयोजनं प्रतीयेतेत्यक्षरार्थः ।

अविशेषेणेति हेतुं व्याचक्षाणो भाष्यकारो भूतभव्यन्यायं(५) दर्शयति-तदयुक्तं, संस्कारकर्मसु तस्यापोदितत्वात् । कर्मैव हि

(१-४) तु० टी० ९ । (३) मी० सू० ४-१-१८

(५) वस्तुतो भूतं भव्यायोपदिश्यत इत्यस्य न्यायस्य संज्ञा यथोक्तमेव टुप्टीकायाम् । सर्वज्ञात्ममुनिभिरित्थं संक्षेपशारीरके (१,१४३) वर्णितोऽयं न्यायः—

भूतं भव्यप्रधानं भवति हि न पुनः स्वप्रधानं कदाचि-
च्छास्त्रस्थाः शब्दशक्तिस्थितिनिपुणधियो विस्तरादेवमाहुः ॥

तथा च तट्टीकायां "भूतं भव्यायोपदिश्यत इति जैमिनिशबरस्वामिनोर्मतं तौ च वेदार्थनिर्णयेऽधिकृताविति तदुक्तमेव ग्रहीतुमुचितमित्यभिप्रेत्याह—भूतमिति" ।

एष न्यायो वेदान्तिभिरपि स्वीकृतः । यथा च तत्रैव (१-३१२)-

तत्र भव्यमपि द्रव्यदेवतं भूतमपि प्रतिगुणभूतमित्युक्तं "यैस्तु द्रव्यं चिकीर्ष्यते" इत्यत्र अत आह–'भूतं द्रव्यं भव्यां क्रियां निर्वर्तयतीति क्रियातोऽदृष्टम्'(१)। यद्यपि पशुपुरोडाशयागस्य देवता संस्कार्या तथाऽपि द्रव्यस्य तादर्थ्यात्तन्निष्पाद्ययोस्त्यागासेचनयोरदृष्टमेव प्रयोजनमिति देवताभिप्रायमपि वा शक्यत एव भाष्यं व्याख्यातुमित्याह–'अथवा यद्यपि यागो देवतां संस्कुर्वन्नुपकरोति तथाऽपि साधनतां प्रतिपद्यमाना(२)' देवता यागस्य 'आश्रयो भवति(३)' संस्कार्या भवति 'नान्यथा। अतः(४)' संस्कार्यत्वपक्षेऽपि द्रव्यदेवतस्य भूतस्यैव क्रियासाधनत्वात्साधनस्य च साध्यार्थत्वमौत्सर्गिकमित्यभिप्रेत्य यैस्तु द्रव्यं चिकीर्ष्यते इत्यत्रोक्तमपवादमनादृत्य सामान्यन्यायप्रदर्शनार्थमुक्तं–'भूतं भव्यायोपदिश्यत इति(५)'।

दर्शितं च तस्मिन्नुत्तरसूत्रेण यैस्तु द्रव्यमित्युक्तमपवादं पूर्वपक्षत्वेन प्रदर्श्य तदुत्तरत्वेनात्रत्यासिद्धान्ततत्वं स्याद्वा द्रव्य-

---

भव्याय भूतमिति किञ्च विधिप्रधाने
काण्डे नयोऽयमिह तद्विपरीतमाहुः।
भूताय भव्यमिति भूतपरं हि सर्वं
वेदायसानमिति सूत्रकृदाचचक्षे ॥

विशेषतस्तन्त्रवार्त्तिके ( २-१-५ ) पञ्चपादिकाविवरणव्याख्याने तत्त्वदीपने ( पृ० ३७७ द्वितीयवर्णके ) च द्रष्टव्यम्।

(१) टु० टी० पृ० ९ (२-५) टु० टी० पृ० १०

(५) अत्र द्वितीयाध्यायप्रथमपादचतुर्थसूत्रभाष्य द्रष्टव्यम्।

चिकीर्षायामित्यत्र दर्शयिष्यत इति ।

चोदनायान्त्वनारम्भो विभक्तत्वान्न ह्यन्येन विधीयते॥१९॥

'यत्र द्रव्यदेवते गुणभूते आख्यातस्य(१)' यथा समिदादिषु 'तत्रैवापूर्वं, यत्र पुनर्द्रव्यं देवता वा प्रधानं(२)' स्विष्टकृत्पशुपुरोडाशादिषु 'तत्र तदर्थत्वादाख्यातस्य नास्त्यपूर्वम्(३)' । एकस्य कर्मणः प्रयोजनद्वयापेक्षाभावादवघातादिवत् ।

स्याद्वा द्रव्यचिकीर्षायां भावोऽर्थे च गुणभूतताऽऽश्रयाद्धि गुणीभावः* ॥२०॥

इति सिद्धान्तसूत्रम् । तस्याभिप्रायमाह-'यद्देवतासङ्कीर्तनं मंत्रेण तत्(४)' सत्यं, 'दृष्टाय स्मरणस्यापेक्षितत्वात्(५)' । अन्तरायपरिहाराय तथा सेचनमपि प्रतिपत्तेरपेक्षितत्वात् । 'त्यागस्त्वदृष्टाय(६)' दृष्टप्रयोजनस्याभावात् । 'तस्माच्चापूर्वम् । (६)'

सूत्रभाष्ययोरप्ययमर्थः । 'स्याद्वा' 'भावो'ऽपूर्वमतः 'स्विष्टकृदादेः सत्यामपि द्रव्यचिकीर्षायां(७)' न चैतावता केवलापूर्वार्थत्वेन देवतासंस्कारार्थत्वं द्रव्यप्रतिपत्त्यर्थत्वं च हीयत इत्याह-'अर्थे च गुणभूतते(८)'ति तत् व्याचष्टे-तस्मिन्नपूर्वे

(१-३) टु० टी० पृ० १०
* सूत्रच्चेदं टुप्टीकाकारैर्न व्याख्यातम् ।
(४-६) टु० टी० पृ १० (७) शबर० पृ० ४४८
(८) मी० सू० ४-१-२०

सत्यपि देवतासंस्काररूपेऽर्थे द्रव्यप्रतिपादने च गुणभूतता याग-स्योपपन्नेति । तत्रापूर्वार्थतां तावदुपपादयति-'मन्त्रेणे'त्या-दिना(१) 'न किं चित् दृष्टमस्ती(२)' त्यन्तेन ।

यत्तु तस्मिन् सत्यपि न संस्कारार्थता हीयत इत्युक्तं तदु-पपत्तिः सूत्रेणैवोक्ता-'आश्रयाद्धि गुणीभाव'(३) इति । तत् व्याचष्टे-'देवताश्रयात्(४)' परकीयद्रव्यदेवताश्रयात् । तत्प्रति गुणत्वे स्थित एव 'देवतागतं तदपूर्वमिति गम्यते(५)' । देव-तासंस्कारसंयुक्तमेवापूर्वं कल्प्यते न तु तत् परिहारेणेत्यर्थः ।

उपन्यासभाष्यमपि यजिनाऽदृष्टं देवतायां क्रियत इत्येतत् देवतासंस्कारसंयुक्तमिति व्याख्येयमिति । प्रयोजनं पूर्वपक्षे द्रव्यनाशे स्विष्टकृतो लोपः । सिद्धान्ते तु आज्येन समापनम् । एतच्चापि वा शेषभाजां स्यादित्यत्र वक्ष्यते—

## ७ प्रतिज्ञाधिकरणम् ।

## अर्थे समवैषम्यतो द्रव्यकर्मणाम्(६) ॥ २१ ॥

एवं तावत् प्रयोजकाप्रयोजकत्वं फलभूतमङ्गीकृत्य तृती-यगोचरः शेषशेषिभावश्चिन्तितः ।

अतः परं तु प्रयोजकाप्रयोजकत्वमेव लक्षणार्थः स्वरूपेण

(१-२) शाबर० पृ० ४४८ (३) मी० सू० ४-१-२०

(४-५) शाबर० पृ० ४४८

(६) सूत्रञ्चैतद्दुप्टीकाकारैर्न धृतम् ।

चिन्त्यते । क्वचित्त्वामिक्षादौ शेषशेषिविचारोऽपि तत्सिद्ध्यर्थं करिष्यते ।

वृत्तवर्त्यविभागोऽयं सूत्रेणानेन कथ्यते ।

सुखग्रहणार्थं द्रव्यकर्मणां दण्डदध्यानयनादीनामर्थं प्रयोजने साम्यमुभयप्रयुक्तिः वैषम्यमेकेन प्रयुक्तिरितरेण नेत्यतः परं वक्ष्यते इति सूत्रार्थः ।

## ८ तप्ते पयसि दध्यानयनस्यामिक्षाप्रयुक्तताधिकरणम् ।

### ( पूर्वपक्षसूत्रम् )

## एकनिष्पत्तेः सर्वं समं स्यात् ॥ २२ ॥

'सर्वशब्दो वक्ष्यमाणसर्वपूर्वपक्षालोचनया द्रष्टव्यः'(१) । सर्वमेवामिक्षा वाजिनक्रयपांस्वादिसंयवननिनयनपर्यन्तमेकरूपायाः । निष्पद्यतेऽनेनेति निष्पत्तेर्दध्यानयनैकहायनीनयनादेः प्रणीतापर्यन्तायाः प्रयोजकत्वेन समं स्यादिति वक्ष्यमाणसर्वपूर्वपक्षाणां तन्त्रेणेदं सूत्रं व्याख्येयमित्यर्थः ।

दर्शितेषु तु तंत्रेण पूर्वपक्षेषु सिद्धान्तस्तत्र तत्र हेतुभेदात् भेदेनाभिधास्यते । तत्र प्रथममामिक्षा वा प्रधानं स्यादिति दध्यानयनगोचरसिद्धान्ताभिधानाच्चद्विषयः पूर्वपक्षोऽभिधीयते- 'यत्प्रयोजनवत्तद् प्रयोजकं, आमिक्षावाजिने च प्रयोजनवती,

---

(१) टु० टी० पृ० १०

अतो दध्यानयनमुभयप्रयुक्तम्(१)'। उभयोः प्रयोजनवत्त्वे सत्यपि यदि दध्यानयनमुभयनिष्पादकं न स्यात्ततो नोभाभ्यां प्रयुज्येत। तत्तु निष्पादकमेवेत्याह–'तच्चोभयनिष्पादनसमर्थम्(२)'।

ननु, पयसि दध्यानयतीति पयःशेषभूतस्य दध्यानयनस्य पयोरूपयैवामिक्षया प्रयुक्तिर्युक्ता न वाजिनेनातच्छेषत्वात्। नैवम्। हविर्हि प्रयोजकं, तच्चामिक्षा। न च पय एवामिक्षा स्वरूपभेदात्। द्रवं हि पयः संहता चामिक्षा। रसभेदोऽपि कियानस्त्येव। केवलो हि पयसो मधुरो रसस्साम्लस्त्वामिक्षायाः। तस्मात्पृथग्भूतैवामिक्षा। सा दधिपयोभ्यां संसृष्टाभ्यां निष्पाद्यत इत्येतावता दध्यानयस्य प्रयोजिका भवति। तद्वत् वाजिनमपि ताभ्यामेव संसृष्टाभ्यां निष्पाद्यमानं तत्प्रयोजकं स्यादेव। तस्मादुभयोरामिक्षावाजिनयोः पयसः पृथग्भूतयोः प्रयोजनवतोश्च निष्पादकं दध्यानयनमुभयप्रयुक्तमिति।

( सिद्धान्तसूत्रम् )

संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात्॥ २३॥

यदि दधिपयोभ्यां वस्त्वन्तरमामिक्षा वैश्वदेवयागहविः स्यात्ततो वाजिनमपि तुल्यं स्यादानयतिवाक्ये द्वयोरप्यश्रुतत्वात्तन्निष्पाद्यत्वस्य चाविशेषात्। नत्वेतदस्ति। पयस एव हविष्ट्वादामिक्षाशब्देनापि तस्यैवाभिधानात्तच्छेषभूतं वाक्येन दध्यानयनं तत्प्रयुक्तमेवेत्येतद्व्युत्पादयितुमारभते–'यत्सर्वनाम्ना प्रतिनिर्दि-

(१-२) तु० टी० पृ० १०

श्यते(१)'। सेति तद्देवतासम्बन्धि। सा वैश्वदेवीतिवचनात्। तेन च सर्वनाम्नानन्तरशब्दनिर्दिष्टं प्रधानभूतं प्रतिनिर्दिश्यते-'तच्च प्रयोजकं'(२) दध्यानयनस्य। किं पुनस्तत्। अयं पूर्ववाक्ये निर्दिष्टं तप्तं पयोदधि चानयतिश्च। तत्र 'आनयतिस्तावत् संस्कारकत्वादन्यत्र'(३) दध्नि पयसि वा 'शेषभूतत्वात्'(४) अप्रधानम्। अतो 'ऽनन्तरोऽपि'(५) अत्यन्तसन्निहितोऽपि सर्वनाम्ना 'न प्रतिनिर्दिश्यते'(६)।

ननु वस्तुतो गुणभूतोऽपि शब्दोऽतः प्रधानभूत एवानयतिः क्रियारूपत्वात् दधिपयसोस्तु कारकत्वेन तच्छेषत्वात्। तावच्च सर्वनामप्रतिनिर्देशे कारणं न वास्तवं प्राधान्यम्। एष राज्ञः पुरुषस्त्वद्रुपकण्ठे तिष्ठति तमानयेति गुणभूतस्यैव पुरुषस्य परामर्शात्। प्रधानस्यापि राज्ञोऽपरामर्शात्। अतः कारणान्तरं वाच्यमत आह-'देवतासम्बन्धे अयोग्यत्वाच्च(७)'। न खलु क्रिया देवतामुद्दिश्य त्यक्तुं शक्यते। अतो न सा वैश्वदेवीशब्दसमानाधिकरणेन सर्वनाम्ना प्रतिनिर्दिश्यते। किं तर्हि प्रतिनिर्दिश्यते ?

तत्रैकस्तावदाह-'दधि चानयतौ प्रधानं द्वितीयानिर्दिष्टत्वात्'(८)। न चानयतौ प्रधानस्यापि पयः प्रति गुणभावाद-प्रतिनिर्देशः। पयस एव दधि प्रति गुणभावात्। दध्नस्तु तदपि प्रति प्राधान्यादित्याह-'सप्तमीनिर्देशात् पयोऽपि तच्छेषभूतं(९)

(१-८) टु० टी० पृ० १०

(९) मुद्रितलेख्ययोः पुस्तकयोः तच्छेषभूतमित्यस्य स्थाने तच्छेषः इत्येव पाठः।

तस्मात्तप्तपय आनयतिविशिष्टं(१)' तप्तपयस्यानीयमानं 'द्वितीयान्तं दधि(२)' पूर्ववाक्ये 'प्रधानभूतम्(३)' । अतः 'तत्सर्वनाम्ना प्रतिनिर्दिश्यते। तदेव* देवतासम्बन्धि(४)'। सा वैश्वदेवीति ।

तस्माद्दध्यर्थमानयनं दधिप्रयुक्तं तदेव तप्ते पयस्यानीतं घनीभूतमामिक्षाशब्देन सर्वनामसमानाधिकरणेनोच्यते । तस्मादामिक्षा प्रयोजिकेति ।

तदेतन्निराकरोति-'एतदपि नास्ति(५)' । यथानयतेः प्रतिनिर्देशो न भवति तथा दध्नोपीत्यर्थः । कथं ? गुणत्वाविशेषात् । तद्दर्शयितुमुपक्रमते-'आनयतिरयं द्विकर्म्मकस्तत्रैकं कर्म्म क्रियया व्याप्यमानमपि(६)' तां प्रति प्रधानमपि 'गुणत्वं प्रतिपद्यत इतरत्प्रति (७)' । द्वयोरेकस्मिन् वाक्ये समप्राधान्यायोगात् द्विकर्मकत्वमेवानयतेर्दर्शयति-'यथाऽजां नयति ग्राममिति(८)' । कस्य पुनरत्रकर्मणः प्राधान्यं कस्य वा गुणत्वमित्यत आह-'तत्र विवक्षातः प्राधान्यम्(९)' । तदेव दर्शयति-'यद्यजा संस्कार्या(१०)' विवक्षिता 'ततः सा प्रधानं ग्रामस्तदर्थः । अथ ग्रामस्य केन चित् कारणेन प्राधान्यं तत आनयतिविशिष्टाऽजा तदर्था(११)' । यत्र तर्हि प्रमाणान्तरेण विवक्षाविशेषो न गम्यते शब्दत एवान्यतरस्य गुणत्वं

---

(१-३) तु० टी० पृ० १०

* अत्र तदेवेत्यस्य स्थाने तदित्येव पठ्यते मुद्रितलेखपुस्तकयोः ।

(४-११) तु० टी० पृ० १०

प्राधान्यं वा निर्णेतव्यम् । शब्दस्तु साधारणस्तत्र कथमित्यत आह–'तत्र द्वयोर्द्वितीयान्तयोर्नास्ति शब्दतो निर्णयः(१)' शब्दस्य साधारणत्वात् । 'किं तर्हि वस्तुतः'(२) । यद्येक फलवदितरदफलं ततः फलवदङ्गमितरन्निर्णीयत इति । 'यत्र तु द्वे अपि(३)' कर्मणी 'प्रयोजनवती द्वितीयान्ते च तत्र नास्त्येव निर्णयः'(४) । एवं तावद्द्वयोर्द्वितीयान्तत्वेनानिर्णय उक्तः । 'यत्र तु सप्तम्या निर्दिष्टमेकमाधारभूत तत्रेतरत्'(५)द्वितीयान्तं कर्म 'आधेयत्वाचत्'(६) प्रतिसप्तमीनिर्दिष्टं 'प्रतिनीयते(७)' । ततश्च (८)'तेन' द्वितीयानिर्दिष्टेन कर्मणा 'व्याप्यमानत्वादितरदेव(९)' सप्तमीनिर्दिष्टं 'तत्र प्रधानम्'(१०)।

ननु तस्याधिकरणत्वेन गुणभावावगमात् कथं प्राधान्यमत आह–'अधिकरणभावो नान्तरीयकत्वादनूद्यते'(११) । यद्धि क्रियया हीयमानं प्रथम कर्म तेनापि व्याप्यमानस्य द्वितीयस्य कर्मणस्ततोऽपि प्राधानस्याप्यधिकरणभावो नान्तरीयको भवतीति सप्तम्याऽनूद्यते । किमर्थं पुनरेवं क्लेशेनानुवादभूता सप्तमी प्रयुज्यते द्वितीयैव व्यक्त प्राधान्य प्रतिपादयितुं कस्मान्न प्रयुज्यतेऽत आह–'एतच्छेदमात्रं क्रियते(१२)' । छेदो विभा

---

(१-९) द्रु० टी० पृ० १० अत्र लेखमुद्रितपुस्तकयोर्व्याप्यमानत्वात्तदेवेति पाठः । तथा च 'व्याप्यमानत्वात्तदेव प्रधान'मित्यग्रिमसूत्ररूपेण लेखपुस्तके पठितम् ।

(१०-१२) द्रु० टी० पृ० ११

गः। उक्तं ह्येतद्द्वयोर्द्वितीयान्तयोः किं प्रथमं किं वा द्वितीयमित्यनवगमान्न मिथो गुणप्रधानभावो निर्णेतुं शक्यते। सप्तमीनिर्देशे तु सति तस्याधिकरणभावेन द्वितीयकर्म्मत्वात् प्राधान्यं सिध्यति तेन योऽयं विभाग एकस्येतरत् प्रति नीयमानत्वेन गुणत्वमितरस्य च तेन व्याप्यमानत्वेन प्राधान्यमिति तन्मात्रसिद्ध्यर्थं सप्तम्याऽधिकरणभावोऽनूद्यते न तु गुणभावमवगमयितुं सप्तमीत्येवं सामान्यन्यायमुक्तं प्रकृते दर्शयति–'इह तु पयः प्रधानकर्म्म(१)'तदेव पूर्वोक्तन्यायेनोपपादयितुं पृच्छति–'कथ(२)' मिति। सप्तमीनिर्देशाद्विशेषणभूतं पयोऽवगम्यते कथमस्य प्राधान्यमित्यर्थः।

तदुपपादयति–'सप्तमी ह्यंशा'(३) सप्तमीनिर्दिष्टस्य द्वे रूपे स्तः। 'अधिकरणत्वात् गुणभूतता, आधेयेन व्याप्यमानत्वात् कर्म्मभूतता(४) तत्र'। आनयतिना द्विकर्म्मकेन 'द्वितीयस्य कर्मणोऽपेक्षितत्वात् यो व्याप्यमानोऽर्थः'(५)व्याप्यमानत्वरूपोर्थः सप्तमीनिर्दिष्टाधिकरणभावबलेनावगम्यते 'स गृह्यते। न तु गुणभावः'(६)। शब्दनिर्दिष्टोऽप्यनपेक्षितत्वात्। स तु द्वितीयकर्मत्वेन प्राधान्यसिद्ध्यर्थः शब्देनानूद्यत इति तेनानपेक्षत्वावयत्वबलेन द्वितीयकर्म्मलक्षणार्थैवेयं सप्तमीति। 'तस्मादानयतिविशिष्टेन दध्ना पयो व्याप्यमानं'(७)–व्याप्यमान-

(१–७) तु० टी० पृ० ११। (४) अत्र मुद्रितलेखपुस्तकयोः 'कर्मभूतता' इत्यस्य स्थाने 'प्रधानभूतता' इति पाठो दृश्यते।
(६) अत्र लेखपुस्तके 'न गुणभावादि'ति पाठः।

त्वादिरयर्थः। 'प्रधानं कर्म'(१)। साध्यं हि प्रधानं द्वितीयं च कर्म प्रथमेनानीयमानेन कर्मणा व्याप्यमानं साध्यमिति तदेव प्रधानम्। 'तत्रावश्यं सामर्थ्यादेव दधिशेषभूतम्, अतः सर्वनाम्ना'(२)प्रधानभूतं 'पयः प्रतिनिर्दिश्यते। तच्च देवतासंम्बन्धि' (३)। एवं तावत्पूर्ववाक्ये पयसः प्राधान्यात् तदेव दधिशेषभूतम्। अतः सर्वनाम्ना प्रतिनिर्दिष्टं हविर्न तु दधीत्युक्तमामिक्षाशब्दसामर्थ्यादप्येवमेव। स हि घनीभूतस्य पयसोऽभिधायको न दध्नः। तद्विनापि काञ्जिकादिना घनीभूते पयसि प्रयोगादित्यष्टमे वक्ष्यामः।

'मन्त्रवर्णश्च पयस एव देवतासम्बन्धं दर्शयति-जुषन्तां युज्यं पय इति'(४) आह—यदि पूर्ववाक्ये दधि प्रधानं यदि वा पय उभयथाऽप्यामिक्षा प्रयोजिका न वाजिनमिति सिद्धान्तः सिध्यत्येव किमर्थं प्रयत्नेन पयःप्राधान्यं साधितमत आह— 'यदि चात्र पयो देवतासम्बन्धि ततो विशेषातिदेशः सिध्यति, पयो वा तत्प्रधानत्वादिति'(५)। अष्टमे हि दधिसङ्घातसामान्यादिति सायंदोहविकारत्वमाशङ्क्य पयो वा तत्प्रधानत्वादिति प्रातर्दोहविकारत्वमामिक्षायागस्य वक्ष्यति। तत्र पयसो हविष्ट्वे सति सिध्यति। 'दधिप्राधान्ये तु(६)' तद्धविष्कस्य यागस्य दधियागेनैव सादृश्यादातञ्चनादिधर्मलाभाच्च सायंदोहविकारत्वस्य प्रसङ्गात्। 'नैतत्(७)'। आष्टमिकविशेषातिदे·

---

(१-७) द्रु० टी० पृ० ११।

शसाधनं 'सिद्ध्यति(१)'। तेन यद्यप्यस्मिन्नधिकरणे विशेषावधारणं नोपयुज्यते तथाप्यऽतिदेशविशेषासिद्ध्यर्थं वस्तुतत्त्वं निरूपितमित्युपसंहरति–'इति(२)' हेतोः 'न(३)' दधि 'संस्क्रियते (४)' किं तु पय एव दध्यानयनेन संस्क्रियते। तदेव सर्वनाम्ना परामृश्यते। कथं तर्हि स्त्रीलिङ्गम्। पयःप्रतिनिर्देशे हि नपुंसकलिङ्गं स्यात्। तस्मात्स्त्रीलिङ्गानुगुण्यादामिक्षापदसमानाधिकरण्याच्चामिक्षैव हविर्न पयः।

न हि पय एवामिक्षारूपभेदादित्युक्तमत आह—'पयसि दधनि निक्षिप्ते आमिक्षाशब्दं प्रयुञ्जते(५)'। दधिनिक्षेपघनीभूतं पय एवामिक्षेति, तत्पदसामानाधिकरण्यं न तावद् दोषः। 'अत एव स्त्रीलिङ्ग(६)'मप्युपपन्नमामिक्षायाः स्त्रीत्वादेवंभूतस्य पयसस्तत्त्वात्। 'तच्चास्यामवस्थायां प्राप्तत्वादनूद्यते'(७)। तदित्युभयोः परामर्शस्तदामिक्षापदं स्त्रीलिङ्गं च तप्ते पयसि दध्यानयने कृते प्राप्तमेवानूद्यते। आमिक्षैव हि सा भवति स्त्री च यत्तप्तं पयो दध्ना संस्क्रियते। तेनैतावानिह विवक्षितोऽर्थः। तप्तं पयो दध्यानयनेन संस्कर्त्तव्यं, तद्वैश्वदेवं कार्यमिति।

कथं पुनरवगम्यते पय एवामिक्षेति? स्वरूपभेदाद्धि तयोर्भेदो युक्तः। अथ स्वरूभेदेऽपि तत्त्वमुच्यते–ततो वाजिनमपि पय एवेति शक्यते वक्तुम्। यत्तु पयसि दध्नि निक्षिप्ते आमिक्षाशब्दो लोके प्रयुज्यत इति तत् तद्विकारत्वेऽप्युपपन्नमेव। तस्मात्प-

(१-७) टु० टी० पृ० ११।

यतः पृथग्भूतैवामिक्षा। सा च हविर्वैश्वदेवीशब्दसामानाधिकरण्यादेवं च सर्वनामापि प्रकृतं पयः प्रतिनिर्देष्टुमामिक्षापदसामानाधिकरण्यविघातभयात् नार्हतीत्येवं व्याख्येयम्। तत्र पयसि दध्यानेतव्यम्। यत्ततो निष्पद्यते सा वैश्वदेव्यामिक्षेत्यत आह-'आमिक्षायां च पयो रस उपलभ्यते'(१)। अयमर्थः-रसाभिव्यक्त्या हि पयस्त्वजातिर्न रूपविशेषमपेक्षते तद्रूपे द्रव्यान्तरे प्रतीत्यभावात्।

यत्तु स्नुहीक्षीरमित्यादिप्रयोगः स स्नुह्यादिपदसम्बन्धवशात् लाक्षणिकः। निरुपपदात् पाशुकस्यैवावगतेः रसविशेषे तु सति द्रवसान्द्रसान्द्रतरसान्द्रतमभेदाभिन्नेऽपि पयस्त्वं प्रतीयते। स चामिक्षायामपि रसविशेष उपलभ्यत इति पय एवामिक्षा।

यत्तु रसभेदोऽप्यत्रास्ति साऽऽम्लत्वादामिक्षारसस्येत्युक्तं, तत्राह—'संस्कारकस्य च दध्नः(२)'। सत्यमामिक्षायामम्लोऽपि रस उपलभ्यते न त्वसावामिक्षायाः। कस्य तर्हि? तत्संस्कारकस्य दध्नस्तत्संयुक्तस्य। आमिक्षापदं तु तत्र मधुररसमेव। पयोंऽशं हंसवत् गोचरयतीति केवलमधुररसमनम्लं पय आमिक्षा। कथं पुनर्द्वयसन्निपाते प्रयुज्यमानमामिक्षापदं विविच्यते मधुररसांशस्यैव वाचकं न त्वम्लस्य दध्यंशस्येत्युक्तोत्तरमेतत्।

दध्यभावेऽपि काञ्जिकादिना घनीभूते पयस्यामिक्षापदस्य लोके प्रयोगात् पयःप्रतिनिर्देशकसर्वनामसामानाधिकरण्यान्मन्त्र-

(१-२) टु० टी० पृ० ११।

वर्णे चामिक्षायामेव पयःशब्दप्रयोगात्पय एवामिक्षेति।

यत्तु वाजिनमपि पय एवेत्युक्तं तत्राह—'उभौ रसौ वाजिने न स्तः'(१)। न हि पयोरसो वाजिने समस्तीति कथं तत्पयः स्यात्। न केवलं पयसो नास्ति. संस्कारकस्यापि दध्नो रसस्तत्र नास्त्येव। अतस्तस्यानयतिवाक्ये संस्पर्शाभावात् दूरापास्तमेव दध्यानयनस्य तच्छेषत्वमिति। तस्मान्न वाजिनं पय आमिक्षा तु पय इति। 'अनेनाभिप्रायेणाह—नामिक्षा नाम पयसोऽर्थान्तरं हविरिति'(२)। अनेन च 'नात्र यद्दधिपयोभ्यां निर्वर्त्यते तद्धविरिति(३)' भाष्यमर्थद्वारेण पठितम्। 'किं तर्हि हविरिति पयोदधिसंसृष्टमि'(४)तिभाष्यमनुभाष्य संसृष्टशब्दाद् दधिपयसोस्तुल्यकल्पत्वमाशंकीतिव्याचष्टे—'पयोदधिसंस्कृतमित्यर्थः'(५)।

'आह—तप्ते पयसि(६)' इत्यादिचोद्यभाष्यस्योत्तरभाष्यं 'शब्दः संसर्गे(६)' इति तदिदमयुक्तम्—

यत्परो हि शब्दः स शब्दार्थः। न चेह संसर्गपरः शब्दः। तप्ते पयसि दध्यानयतीति। यदि हि दधिपयसी संसृष्टे हविः स्यातां ततस्तत्संसर्गपरः शब्दः स्यात्। पयसस्तु हविष्ट्वे तत्संस्कारपरत्वात् शब्दस्य स एव शाब्दो न तु संसर्गः। तस्यापि संस्कारार्थत्वादत आह—'पयसश्च संस्कार्यता शब्देनैव दधि

(१-२) टु० टी० ११।
(३) शबर० पृ० ४४९, टु० टी० पृ० ११।
(४) टु० टी० पृ० ११। (५-६) शबर० पृ० ४५०।

प्रति'(१)। यद्यपि न संसर्गपरः शब्दस्तथाऽपि संस्कार्यता तावच्छब्दार्थ एवेत्यर्थः। ततः किमित्यत आह-'तच्च'(२) दधिपयसः 'संस्कारकं संसर्गादृते न भवति। तस्मादनेन द्वारेण(३)' संस्कारसिद्ध्यर्थतया 'संसर्गश्चिकीर्षितः'(४)। संस्कारपरस्यापि शब्दस्य तत्सिद्ध्युपाये संसर्गेऽस्त्येव तात्पर्यलेश इत्यतोऽभिप्रायादाह भाष्यकारः-'शब्दः संसर्ग'(५) इति।

तेन यथोक्तवादिनोक्तं दध्यानयनेन संसर्गे विवेके च निष्पाद्यमाने कथं ज्ञायते संसर्गोऽत्र पयसः संस्कारार्थतया विवक्षितो न तु विवेको वाजिनसंस्कारार्थतयेति तत्संसर्गद्वारेण पयःसंस्कारः शाब्दो वाजिनसंस्कारस्त्वशाब्द इति परिहृतं भवतीति।

'इतरस्मिन्(६)' वाजिनसंस्कारार्थत्वपक्षे पयसि दध्यानयनं वाजिनविवेकलक्षणार्थं स्यादिति'(७) भाष्यं-तदनुपपन्नम्। न हि वाजिनार्थत्वेऽपि कस्य चिच्छब्दस्य लक्षणार्थत्वम्। तत्र पयसि दध्यानयनमेव विधीयते। तत्तु वाजिनार्थं न च पयोऽर्थमित्येतावदत आह-'पयः प्रति संस्कारकत्वं शब्देनावगम्यते। तद्धित्वाऽन्यस्या'(८)श्रुतस्य 'वाजिनस्य शेषभूतं क्रियतेऽतोऽश्रुतेन सम्बन्धात् लक्षणा'(९)।

---

(१-४) टु० टी० पृ० ११।

(५) शबर० पृ० ४५०, टु० टी० पृ० ११।

(६-७) शबर० पृ० ४५०, टु० टी० पृ० ११-१२।

(८-९) टु० टी० पृ० १२।

यद्यपि न कस्य चित्पदस्य श्रुतमर्थं हित्वाऽन्यत्र वृत्तिरस्ति तथाऽपि विधीयमानस्य दध्यानयनस्याश्रुतवाजिनशेषत्वे तद्द्वारेण शब्दस्याप्यश्रुते तात्पर्याल्लक्षणेत्युक्तम् । श्रुतपरित्यागेन नाश्रुतस्य शेषित्वं युक्तमितितात्पर्यं भाष्यकारस्येति ।

## मुख्यशब्दाभिसंस्तवाच्च ॥ २४ ॥

आह—यद्यपि न वाजिनस्य दध्यानयनमङ्गं तथापि तस्य तावज्जनकमेव । तावता च तेन प्रयोजनवता किं न प्रयुज्येत । अत उत्तरमिदं सूत्रम् । न तावदेकप्रयुक्त्युपजीवनेनापीतरविध्युपपत्तावुभयोः प्रयोजकत्वं युक्तम् ।

न च दध्यानयनस्योभयप्रयुक्तिमन्तरेणानुपपत्तिः, तस्याप्येकैनैवानुष्ठानोपपत्तेस्तदाह 'तापविशिष्टं दध्यानयनम्'(१) । पयसस्तापस्तप्ते च तस्मिन् दध्यानयनमिति यदिदं संस्कारद्वयं तद् द्वयमपि 'प्रयोजकेन यावन्न सम्बध्यते तावत्(२)' प्रयोजकं प्रति 'साकांक्षमनर्थकम्'(३) । अनुष्ठानाय हि सर्वमाम्नायतेऽतो सत्यनुष्ठापके तदलाभादनर्थकम् । 'तस्मादानर्थक्यपरिहारार्थमामिक्षातावत्प्रयोक्त्री'(४) स्वीक्रियतेतत्सम्बन्धित्वेन प्रथमं शब्दत एवागमात् ।' 'आमिक्षया चाऽऽनर्थक्ये परिहृते नास्ति वाजिनेन सम्बन्धः'(५) । अन्तरङ्गत्वाच्च पयःपर्यन्तं दध्यानयनं वाजिनं तु आनयने निर्वृत्ते पश्चान्निष्पद्यमानं बहिरङ्गत्वाच्च प्रयोजकं युक्तम् ।

(१—५) तु० टी० पृ० १२　　(२) शाबर० पृ० ४४६ ।

अयं च सूत्रार्थः-मुख्यशब्दस्य शेषित्वेन पयः प्रतिपादयतः शब्दस्यान्तरङ्गस्य चाऽभिसंस्तवः प्रयोजकत्वं न्याय्यमिति तदनेनाध्ययनस्यान्तरङ्गभूतः शेषिभूतश्च स्वाधिकार एव प्रयोजको न तु वहिरंगोऽतच्छेषिभूतश्चाचार्यकरणविधिरिति दर्शितम् ।

अर्थांतरं तु भाष्य एव द्रष्टव्यम् । मुख्यशब्देन मिथुनसंयोजनवाचिना गर्भशब्देनामिक्षाया अभिसंस्तवात्तदर्थमेव मिथुनसंस्तुतयोर्दधिपयसोः संसर्गरूपं दध्यानयनं न वाजिनार्थमिति ।

## ९ गवानयनस्य पदकर्म्माप्रयुक्ताधिकरणम् ।

## पदकर्म्माप्रयोजकं नयनस्य परार्थत्वात् ॥२५॥

अत्र परार्थत्वादित्यपूर्ववद्धेतुरुच्यते। पूर्वमपि च दध्यानयने पारार्थ्यमेव वाजिनस्याप्रयोजकत्वे हेतुरुक्तस्ततःकथमेतदित्याशंक्य परार्थत्वादित्येतत् व्याचष्टे-'अनेन न्यायेन'(१) अनेन पूर्वोक्तेन एकनिष्पत्तेः सर्वं समं स्यादित्यधिकरणस्थेन न्यायेन नैतदपूर्वहेत्वभिधानं किं तु पदकर्म्माप्रयोजकमेकहायनीनयनस्य पूर्वोक्तादेव पारार्थ्यादिति ।

यद्यत्रापि स एव न्यायः कथं तर्हि पूर्वपक्षस्तं दर्शयति —'पदकर्म'(२) अक्षाभ्यंजन 'पांसून् मयुंक्ते' (३) । तदेवोपपा-

( १-३ ) तु० टी० पृ० १२ ।

दयति-'ते च(१)' पांसवो 'अक्षाभ्यंजने'(२) तृतीयाश्रुत्या 'विनियुक्तास्तेन प्रयुज्यंते'(३)। चशब्दो हेतौ। पांसूनां हि श्रुत्यैव तादर्थ्यावगमात् परप्रयुक्त्यभावाच्चाक्षाभ्यंजनेन प्रयुक्तिः स्पष्टैवेति।

क्वचित्तु पदकर्म पांसुभिः प्रयुज्यते इति पाठस्तत्र सप्तमपदग्रहणं पदकर्मोच्यते। किंप्रयुक्तैः पांसुभिः तत्प्रयुज्यत इत्यत आह-'ते चेति'(४)भवतु तेषां प्रयुक्तिः। नयनस्य तु कथं तत्प्रयुक्तिस्तस्य क्रयार्थत्वादत आह-'अतः'(५)। तेषां सर्वोऽपि 'आत्मसिध्यर्थं नयनं प्रयुंजते'(६)। न हि तदन्तरेण सप्तमात् पदात् पांसवो ग्रहीतुं शक्यन्ते। द्वितीये तु पाठे निगमनमेतद्यत एवं पांसवः पदग्रहणं प्रयुंजतेऽतस्तद्द्वारेण नयनमपि प्रयुंजत इति।

यत्तु परार्थं नयनमिति तत्राह-'क्रयोऽप्यात्मसिध्यर्थमेकहायनीं'(७)एकहायनीनयनमित्यर्थः(८) 'प्रयुंक्ते'। नहि नयनस्य क्रये विनियोगोऽस्ति, एकहायनीमात्रविनियोगात्। तया तु विशिष्टे देशे क्रयोनान्तरेण नयनमुपपद्यत इत्यर्थान्नयनप्रयुक्तिः। अर्थाद्यैत् पदकर्मापि साध्यमेवेति। 'पशावनालम्भादिसन्नाप्यमेव पूर्वः पक्षः'(९)। तदेतत्तत्रैव दर्शयिष्यामः।

---

(१—२) टु० टी० पृ० १२
(३) विनियुक्तत्यादिति लेखकपाठः।
(४-९) टु० टी० पृ० १२

'एवं प्राप्ते आह–क्रये स्ववाक्येनैव द्रव्यविशेषो निर्दिश्यते'(१)। एकहायन्या क्रीणातीति। 'इतरत्र'(२)पदपांसुग्रहणे 'स्ववाक्येन द्रव्यविशेषानिर्देशात्'(३)सप्तमं पदमित्येतावच्छ्रवणात्कस्य सप्तमपित्याकांक्षायां 'प्रकृतं (४) एकहायनी द्रव्यं 'गृहीत्वा'(५) तेन द्रव्यविशेषेण 'वाक्यसम्बन्धः'(६)।

न चैकहायनी स्वरूपेण प्रकृतास्ति किं तु क्रयार्थं नीयमाना। तेनायमर्थः–परार्थं नीयमानाया एकहायन्याः सप्तमं पदमिति। ततः किमित्यत आह–'प्रयोजकत्वे'(७)द्वयोः 'विरोधात् प्रसङ्गेण'(८) क्रयार्थत्वेन 'काल्पनिकं' (९)पदपांस्वर्थत्वं 'बाध्यते'(१०)। अत आह भाष्यकारः–'प्रकरणाद्ध वाक्यं बलीयः'(११) इति।

नन्वेकहायन्या वाक्येन क्रये विनियोगो न तन्नयनस्य तत्प्रयोजकत्वं च पूर्वपक्षवादिना पदकर्मणोऽभिधीयते। तन्मतेऽपि ह्येकहायनी क्रयप्रयुक्तैव न पदकर्मप्रयुक्ता—

सत्यम्। नयनमेव क्रयार्थमेकहायन्यास्तादर्थ्यादित्युच्यते। यदि ह्येकहायनी पदपांसुग्रहणेऽपि वाक्येन विनियुज्येत ततस्तत्र नयनं तदर्थं स्यात्तस्यास्तु क्रयार्थत्वे तत्संस्काररूपं नयनमपि तदर्थमेव युक्तम्। यदि वाक्येन प्रकरणं बाध्यते तर्हि सप्तमं पदं गृह्णातीतिवाक्यं

(१—१०) तु० टी० पृ० १२
(११) शाबर० पृ० ४१२, तु० टी० पृ० १२

प्रकृतसम्बन्धाभावात् साकांक्षं स्यादित्याशंकां निवर्त्तयन्नुपसंहरति-'तस्मात्क्रयप्रयुक्तासती'(१) एकहायनी 'प्रसंगात्पदपांसथर्पीति'(२)। पदपांसूनामप्युपकारिकेतिक्रयार्थाऽपि शक्नोत्येव पदपांसुग्रहणवाक्येन सम्बद्धुम् । याऽसौ क्रयार्था तत् सिद्ध्यर्थं नीयते तस्या यत्सप्तमं पदं तत् गृह्णातीति तादर्थ्यमात्रं तु तस्याः क्रयार्थत्वान्नेष्यत इति प्रसंगादिति नानुष्ठानप्रसङ्गाभिप्रायमप्रयोजकत्वाधिकारात् किंतु शास्त्रप्रसङ्गाभिप्रायं शास्त्रमेव हि क्रयप्रयुक्तनयनोपजीवनेन प्रवर्त्तते एतदेव चाप्रयोजकत्वम् ।

यत्र त्वन्यनिराकांक्षेण शास्त्रेण विहितस्यानुष्ठानमन्यप्रयुक्तमुपजीव्यते तत्र प्रसङ्ग इति । यत्त्वक्षाभ्यंजनपांसून् प्रयुंक्त इति तत्राह-'अक्षाभ्यञ्जनं यद्यपि'(३)श्रुतिविनियुक्तानां 'पांसूनां प्रयोजकमेव तथाऽपि'(४)सप्तमपदस्य ग्राव्णि निधाने कृते तदलाभात् 'यत् किञ्चित् द्रव्यमुपादाय(५)' अक्षाभ्यंजनं संस्काराविलोपाय कर्त्तव्यं 'पांसून्वापि'(६)यान् कांश्चिदुपादाय कार्यमिति ।

ननु परप्रयुक्तद्रव्योपजीविनस्तदलाभे वाजिनयागवदंजनस्य लोप एव युक्तः । सिद्धान्तेन तु येन केन चिदञ्जनमितिन्यायः सिद्धान्तस्तत्राह-'अयमेव सिद्धान्तो न्याय्यः'(७) । न त्वंजनस्य लोपः सिद्धान्तयितुं युक्तः ।

यत्र हि द्रव्योत्पत्तिस्तदुपादानं चान्यप्रयुक्तं भवति; यथा

---

(१—७) २० टु० टी० पृ० १२

वाजिनयागे वाजिनोत्पत्तिरामिक्षाप्रयुक्तदध्यानयनाधीना, यथा च तुषोपवापे कपालोपादानं पुरोडाशप्रयुक्तम्। तत्र तदलाभेऽनुत्पन्ने नानुपात्तेन च क्रियानुष्ठानासम्भवात्। स्वयं च तत्प्रयुक्तौ शक्त्यभावादगत्या लोपोऽपि विनैव तु यस्य स्वसाधनं साधनान्तरेणैव प्रयुक्तस्यानुष्ठानं सम्भवति; यथा तुषोपवापस्य हस्तमात्रेण चरुष्वनुष्ठानं संभवति तत्र कर्त्तव्यम्। अत्र तु नैक्हायनीनियमं पांसूनामुत्पादकं नाप्युपादायकं किन्तु संस्कारकमात्रमुपादानम्। अञ्जनप्रयुक्तमेव। शक्यते चासंस्कृतैरपि क्रियानुष्ठातुम्। तेन परप्रयुक्तसंस्कारालाभेऽसंस्कृतान्यप्युपादाय पांसूनक्षाभ्यंजनं कर्त्तव्यमेवेति सिद्धम्।

१० कपालानां तुषोपवापाप्रयुक्तताधिकरणम्।

## अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्वात्तदर्थो हि विधीयते ॥२६॥

पुरोडाशकपालस्य श्रुत्यैव तुषोपवापे विनियोगात् तादर्थ्यं स्पष्टम्। पुरोडाशार्थत्वमप्यविवादमित्युभयप्रयुक्तत्वं युक्तम्।

ननु न पुरोडाशवत्तुषोपवापे निरपेक्षं कपालं श्रूयते। पुरोडाशेन हि संयुक्तं कपालं निर्दिष्टं दृश्यते। संयोगश्च भविष्यता पुरोडाशेन कपालस्य तादर्थ्यलक्षण एव। तस्मात्पुरोडाशार्थस्यैवोपात्तस्य तुषोपवापे विनियोगात्। न तेनापि प्रयुक्तिर्युक्ता—

उच्यते। न पुरोडाशार्थस्यान्यत्र विनियोगः सम्भवति

विनियुक्ताविनियोगविरोधात्। कपालमात्रं तु तत्र विनियुज्यते। तच्च निरपेक्षमेवोभयत्र पुरोडाशे तुषोपवापे च विनियुक्तमनुष्ठानकाले लाघवादेकमेवोभयार्थमुपादीयते इति पुरोडाशकपालेनेत्यनुवादः। कपालेनेत्येतावदेव तु विधित्सितम्। तस्मादुभयप्रयुक्तं कपालं तद्धारणं चेति प्राप्ते सिद्धान्तमाह–'स्वप्रयोजनसंयोगेन पुरोडाशकपालं निर्दिश्यते पुरोडाशकपालमिति'(१)। संयोगोऽपि यदि भूतः समाश्रीयते–प्रयोगान्तरे यत्पुरोडाशसंयुक्तमासीत् कपालं तेन तुषानुपवपतीति–तदास्मिन्प्रयोगे तुषोपवापेन तस्योपादानं धारणं च प्रयुज्येत। न त्वयं भूतसंयोगो लक्षणाप्रसङ्गादित्याह–'वर्त्तमाने संयोगे पुरोडाशकपालता मुख्या। भूतभविष्यतोस्तु'(२)संयोगयोर्मध्ये 'भूते'(३) समाश्रीयमाणे लक्षणा स्यात्'(४)। कथमित्याह–'आसीदन्यस्मिन् काले'(५)संयोगो न तु वर्त्तत इति। न खल्वपगतश्यामं बदरफलं श्यामशब्दोऽभिनिविशते। आह–किमिदं भूते लक्षणेत्युच्यते। भविष्यत्यपि हि लक्षणैव वर्त्तमान एव मुख्यः न त्विह तथा सम्भवति। न हि तुषनिरसनकाले पुरोडाशसंयोगो वर्त्तते। अतो भविष्यन्नाश्रयितव्यः। तत्रापि लक्षणा तुल्यैव। न ह्यनागतश्यामे द्रव्ये श्यामशब्दो भवति। लक्षणा चेत्–भूताश्रयणमपि नानुपपन्नमत आह–'भविष्यति'(६)तु संयोगे 'नास्ति लक्षणा'(७)। यद्यप्यन्यत्र भविष्यत्संयोगे लक्षणाऽस्ति तथाप्यत्र नास्तीत्यर्थः।

---

(१–७) ५० टु० टी० पृ० १२

कथमित्याह-'पात्रासादनकाले प्रयोजनं' (१)पुरोडाशं 'उररीकृत्य तानि'(२)कपालानि 'साध्यन्ते । तस्मात्'(३) सादनादारभ्यापुरोडाशनिष्पत्तेः 'वर्त्तत एव तेषां प्रयोजनम्' (४)। उक्तं ह्येतत्-आद्यपरिस्पन्दात् प्रभृत्याफललाभात् वर्त्तमानः काल इति । 'तस्मात्(५)'लक्षणाभावात् 'भविष्यतैव संयोगेन यद्यत्' (६)यस्मात् 'निर्दिश्यान्यत्र' (७)तुषोपवापे कपालं 'उपदिश्यते, तत्'(८)तस्मात् 'अप्रयोजकं'(९)तुषोपवपनम् । यत्तदा लुप्तपञ्चमीके अव्यये । कुत इत्याह-'परकीयत्वात् द्रव्यस्य'(१०) । पुरोडाशेनैवोपादापितं धारितं च कपालं स्वाङ्गत्वेन विनियुक्तमपि तुषोपवापो न भूयः प्रयोक्तुमर्हति ।

यत्तु विनियुक्तविनियोगविरोधात् कपालमात्रस्यैव विनियोगो न पुरोडाशीयस्येत्युक्तं तदयुक्तम् । पुरोडाशार्थत्वरूपेणान्यत्राविनियोगात् । तथा हि-सति तेन रूपेणान्यशेषत्वानुपपत्तेर्विरोधः स्यात् । तादर्थ्येन तु स्वाधिष्ठानस्य कपालस्वरूपस्य लक्षणात्तस्य चान्यशेषत्वोपपत्तेरविरोधः । न चैवं कपालमात्रस्यैव लक्षणा स्यादिति वाच्यं, तादर्थ्येन स्वाधिष्ठानस्य कपालविशेषस्यैव लक्षणात् ।

न हि तीरलक्षणार्थमपि गङ्गापद वापीतीरं लक्षयतीति । तस्मादप्रयोजकं तुषनिरसनङ्कपालपालनोपादानयोः । 'अवघातकाले यत्तुषनिरसनं तदिहोदाहरणम्'(११)। अवघातकाल इति

(१-११) टु॰ टी॰ पृ॰ १३

हेतुनिर्देशः। तेनायमर्थः। तुषनिरसनमेवात्रोदाहरणम्। तद्ध्यवघातकाले क्रियमाणं भविष्यत्संयोगाश्रयत्वात् भवति पालनस्याप्रयोजकम्।

यत्तु धान्यकणनिरसनं प्रणीतानिनयनकाले वाजसनेयिभिः समाम्नातं तत् पुरोडाशकपालसाधनकमपि भूतसंयोगाश्रयत्वात्पालनस्य प्रयोजकमेवेति नोदाहरणम्। उपादानाप्रयोजकत्वे तु तदप्युदाहरणमेवेति।

११. शकृल्लोहितयोः पशावप्रयोक्तृत्वाधिकरणम्(१)।

## पशावनालम्भाल्लोहितशकृतोरकर्म्मत्वम्(२) ॥२७॥

पदकर्म्मन्यायेनात्र पूर्वपक्ष इत्युक्तम्–यथानयनस्य वाक्येन क्रये पदकर्मणि चाविनियोगादार्थिकी प्रयुक्तिरुभाभ्यां समेत्युक्तं तथा हृदयादिवाक्ये शकृल्लोहितवाक्ययोश्चोभयत्र पशोरश्रवणात् प्रकृतग्रहणे चोभयोः समत्वादुभयप्रयुक्तः पशुरिति।

सिद्धान्तस्तु–यद्यपि हृदयादिसम्बन्धः पशोरश्रुतस्तथाऽपि यागार्थतया श्रवणात्तादर्थ्यं तावदस्ति। तच्च विशसनश्रवणान्न स्वयं हविष्ट्वेन किं तु हविःप्रकृतितया। हृदयादीनां चावदानदर्शनेन हविष्ट्वं नान्येषामिति दशमे साधयिष्यते। तस्मात् तदर्थ एव पशुः, निरसनसम्बन्धार्थौ तु हृदयाद्यर्थालब्धपशुवनुनिष्पन्नयोः शकृल्लोहितयोर्द्वितीयासंयुक्तयोः प्रतिपत्तिरिति।

(१) अधिकरणमेतट्टुप्टीकायां नास्ति।

(२) सूत्रमेतट्टुप्टीकाकारैर्न व्याख्यातम्।

यद्यत्तुनिष्पन्नस्य स्वयं कार्यानुपयोगिनोऽपि प्रतिपत्त्यर्हत्वं वाजिनयागोऽपि तर्हि वाजिनप्रतिपत्तिः स्यात् । अस्तु, न कश्चित् दोषः । तथा च सप्तमे भाष्यकारो वक्ष्यति । तस्मादप्रयोजके । शकलञ्लोहितसम्मन्थ्याथनिरसने पश्चात्लम्भस्येति सिद्धम् ।

## १२ पुरोडाशस्य स्विष्टकृदप्रयुक्तताधिकरणम् ।

### ( सिद्धान्तसूत्रम् )

## एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात्(१) ॥२८॥

परकीयद्रव्यैकदेशो द्रव्यं यस्य स्विष्टकृदादिकर्मणः । तदपि तदुत्पत्तौ सत्यामपि न प्रयोजकमेकदेशस्य, तादृशस्य परप्रयुक्तेन विद्यमानेन संयोगावगमात् । अथ वोत्पत्तावित्युच्चार्यमाण एवोत्तरार्द्धादिशब्दो विद्यमानशेषाविषयः प्रतीयत इत्यर्थः ।

तदिदं सिद्धान्तसूत्रं स्पष्टमुल्लंघ्य व्याख्याने पूर्वपक्षसूत्रं पठति—

## निर्देशात्तस्यान्यदर्थादिति चेत् ॥ २९ ॥

'(२)आग्नेय इति सकलस्य' पुरोडाशस्याग्न्यर्थत्वेन'(३) निर्देशात्तस्योत्तरार्द्धो' विद्यमानोऽपि '(४)कथमन्येन' स्विष्टकृदादिना देवतान्तरेण '(५)प्रयुज्यते' । न ह्यन्यस्मै परिकल्पितमन्यस्मै दातुमीष्टे यजमानः, शिष्टाचारविरोधात् ।

---

(१) सूत्रञ्चैतद्दुप्टीकाकारैर्व्याख्यातम् ।

( २-५ ) टु० टी० पृ० १३ ।

'(१)तस्मादर्थादन्यद्द्रव्यान्तरमुत्पाद्यम्' । नह्यनुत्पादिते तस्मिन् स्विष्टकृदिज्या सम्भवतीति '(२)तस्य' द्रव्यान्तरस्योत्तरार्द्धात् स्विष्टकृदिज्यते'(३) । अतः प्रयोजकः पुरोडाशोत्तरार्द्धयोः स्विष्टकृदिति ।

## न शेषसन्निधानात् ॥ ३० ॥

'(४)उत्तरार्द्धादिति शेषश्रुत्यन्यथानुपपत्त्या शेषिणं प्रयुंक्ते' । शेषस्यावयवभूतस्योत्तरार्द्धस्य साधनत्वं श्रुतं शेषिणमवयविनमन्तरेणानुपपन्नमिति स्विष्टकृद्यागस्तं प्रयुंक्ते । '(५)स चाग्निप्रयुक्तः शेष्यस्ति' । प्रकृतस्तदुत्तरार्द्धादेव लब्धात्मा स्विष्टकृन्नान्यप्रयुक्त्यै प्रभवति । अतश्च प्रकृतग्रहणमित्याह–'न चैवं श्रूयते पुरोडाशस्योत्तरार्द्धादिति(६)' । यद्येवमश्रोष्यत ततोऽपूर्वमपि पुरोडाशमुत्पाद्य तदुत्तरार्द्धात् स्विष्टिकृदयक्ष्यत । उत्तरार्द्धमात्रं तु श्रूयते । न चैतावता विशिष्टविषयो व्यवहारः सिद्ध्यति । सर्वो हि कस्य चिदुत्तरार्द्धः । स एष सन्निधिमपेक्ष्य निराकांक्षो भवति । सन्निहितश्च परार्थ एव पुरोडाशः । '(७)तस्मात् परप्रयुक्तद्रव्यनिष्पाद्यत्वात् पुरोडाशोत्तरार्द्धयोरप्रयोजकः' स्विष्टकृद्यागः ।

यत्तु शिष्टाचारविरोधात् न परार्थस्य ग्रहणमिति तदयुक्तम्, आचारस्य श्रुत्या बाधात् । कथं पुनस्त्यक्तं द्रव्यं पर-

(१–७) टु० टी० पृ० १३ ।

कीयमनीशानः परस्मै दद्यात् । वचनादिति ब्रूमः । यदि यागो दानवत् परस्वत्वपर्यन्तः स्यात्ततः त्यक्तस्य देवतास्वत्वात् पुनः स्वीकरणमशक्यं स्यात् । न त्वसौ परस्वत्वापादकः । तेन यागे कृते द्रव्यं न यजमानस्य, न देवतायाः, किं तु महीणम् । तच्च पुनः स्वीकर्तुं शक्यमितिवचनबलात् स्वीक्रियते ।

न च विनियुक्तविनियोगविरोधः, प्रतिपादितत्वात् । तदाह भाष्यकारः–'वाचनिक एव शेषप्रतिपादनार्थं उत्सर्गः स शक्यः कर्तुम् । दानं ह्युत्सर्गपूर्वकः परस्य स्वत्वसम्बन्धः, स न शक्योऽनीशाऽनेनेति'(१) । कोऽभिप्रायः —यदि स्विष्टकृदिज्या दानवत् परस्वत्वपर्यन्ता स्यात्तत आग्नेयादियागानामपि देवतास्वत्वापादनत्वात्तदीयेन द्रव्येण स्विष्टकृतं यष्टुमनीशानो यजमानो न शक्नुयात् । न त्वेतदस्तीत्यभिप्रायः ।

के चित्तु दानं सम्प्रदानार्थत्वात् नान्यदीयेन कर्तुं शक्यं विनियुक्तविनियोगविरोधात्, उत्सर्गमात्रं तु प्रतिपत्त्यर्थं कर्तुं शक्यमित्येवं व्याचक्षत इति ।

१३. अभिघारणे शेषधारणतत्पात्रयोरनुष्ठानम् ।

अभिघारणे विप्रकर्षादनुयाजवत्पात्रभेदः स्यात(२)॥३३॥

तदिदं सूत्रं स्पष्टार्थमव्याख्येयमित्युपेक्ष्य

न वाऽपात्रत्वादपात्रतैकदेशत्वात् ॥ ३४ ॥

इति सिद्धान्तसूत्रमेव व्याख्येयं पठित्वाऽधिकरणमारभते ।

(१) शबर पृ० ४५५ । (२) सूत्रञ्चैतट्टुप्टीकाकारेर्न व्याख्यातम् ।

अत्र भाष्यकारेण विकृतिविषयो विचारो दर्शितः । वाजपेये क्रतुपशूनां सवनीयानां प्राजापत्यानां च सहप्रयोगमारभ्य पर्यग्निकरणान्ते कृते प्राजापत्यानां पक्षद्वयमाम्नातं-सहैव वा क्रतुपशुभिः प्रातः सवन एवालम्भस्तदानीं वोत्सृज्य माध्यंदिने ब्रह्मसामकाले आलम्भ इति ।

तत्र यदायं पक्षः समाश्रीयते तदा विचार्यते-किं प्रातःसवनानुष्ठितानां प्रयाजानां शेषस्य धारणं प्राजापत्यवपाभिर्माध्यंदिनीयाभिः स्वाभिघारणार्थं प्रयुज्यते, किं वा नेति । तद् सिद्ध्यर्थमिदं चिन्त्यते-किमभिघारणं हविः-संस्कारार्थं किं वा प्रयाजशेषस्य प्रतिपत्तिरिति । हविः-संस्कारार्थत्वे प्राजापत्यवपानामवैगुण्यार्थं धारणं स्यात् । प्रतिपत्त्यर्थत्वे तु क्रतुपशुवपास्वेव सन्निहितासु प्रतिपत्तेः सिद्धत्वात् । वपानां चानभिघृतानामवैगुण्यादधारणमिति प्रकृतावपि चाग्नीषोमीये शक्यत एव विचारयितुं किं प्रयाजकाले यानि हवींषि सम्भवंति, आज्यवपापृषदाज्यानि तेषामेवाभिघारणेन क्षपयितव्यः शेषः । किं वा विप्रकृष्टकालानां हृदयादिहविषामभिघारणार्थं धारयितव्यमिति । तत्किमिति विकृतिरुदाहृतेत्याशङ्क्याह—'प्रकृतावपि सम्भवति विचारे विकृतिरुदाहृता । तद्विषयाणि लिङ्गदर्शनान्युपात्तानि सूत्रकारेण'(१)क्रतुपशुभिः सह प्रातःसवन आलम्भे वपाभिघारणलाभं दर्शयन् उत्कर्षपक्षे चाभिघारणभा-

---

(१) टु० टी० पृ० १३ ।

षात्, सतर्कं सत्यत्वं प्रश्नसाम्ना समादधदाचिन्नपक्षेऽभिघारणं नास्तीति द्योतयति--'अन्यदपि सम्भवत् लिङ्गं द्रष्टव्यमिति च बहुवचनं तस्य व्याख्यानार्थं विकृत्युदाहरणमिति। तत्र द्वितीयातृतीयाभ्यां हविःप्रयाजशेषयोः प्राधान्यगुणभावावगमात्, अन्यशेषस्यापि चान्यत्राधिष्ठानलक्षणया पुरोडाशकपालवद्विनियोगोपपत्तेर्हविःसंस्कारार्थमेवाभिघारणम्। अन्यथा श्रुतिद्वयस्यापि बाधात्। उपयोक्ष्यमाणसंस्कारस्य चोपयुक्तसंस्काराद्गरीयस्त्वादित्येवं प्राप्ते सिद्धान्तमाह--'प्रयाजशेषेणेत्युच्चार्यमाणमेवान्यत्र शेषत्वेनोपयुक्तं दर्शयति। तस्मादीदृशं'(१)अन्यत्र शेषत्वेनोपयुक्तं तेनैव प्रयुक्तत्वा'न्न ततोऽन्येन प्रयुज्यते यथोत्तरार्द्धः स्विष्टकृता'(२)।

ननु मा प्रयोजि द्रव्यं तद्धारणं तु भूतसंयोगाश्रयत्वेन भविष्यत् संयोगाश्रयतुपोषवायवैषम्यात्। किं न प्रयुज्यते? अत आह-'कृतार्थं चेदं द्रव्यं प्रतिपत्तिमपेक्षते(३)'

स्यादेवं यदि हविःसंस्कारोऽभिघारणं स्यात् न त्वेतदस्यपेक्षितं हि फलं भवति। प्रतिपत्तिश्चापेक्षिता। हविषा वाक्यान्तरेणैवासंसर्गार्थोपस्तरणाभिघारणविधानादनपेक्षितः संस्कारो न भवितुमर्हति। द्वितीयाद्या हि विभक्तयो न साक्षात् शेषशेषिभावस्याभिधायिकाः, किं तु साध्यसाधनमात्राभिधायिन्यो विध्याक्षिप्तं समीहितं भाव्यं विशिंषन्ति न त्वसमीहितमेव तद्बलेन स-

(१-३) टु० टी० पृ० १३।

भीहितभावमनुभावमर्हतीति सक्त्वधिकरणे दर्शितं न्यायरत्नमालायां चास्माभिः। एवं च प्रयाजशब्देनाधिष्ठानविशेषलक्षणार्थो भवति पुरोडाशकपालं त्वनपेक्षितप्रतिपत्तितुषोपवापार्थमिति युक्तं इह तु न तथेति। तेनेदमभिघारणेन क्रियत इत्याह––'यत्किंचिद्द्रव्यं प्रतिपादनीयं(१) तत्सर्वं हविःषु प्रतिपाद्यते। ततो नियमाददृष्टमात्रम्(२)'। हविरर्थत्वे त्वभिघारणस्वरूपमेवादृष्टार्थं कल्प्येत तच्चायुक्तमिति।

यदि प्रयाजशेषार्थमभिघारणं ततस्तस्योद्दिश्यमानत्वात् एकस्मिंश्च वाक्ये द्वयोरुद्देश्ययोरसमवायात् हविषामुपादेयत्वेन संख्या विवक्षिता स्यात्। ततश्च यद्ग्रहाधिकरणे हविषामुद्देश्यत्वेनाविवक्षितसंख्यत्वमुक्तं तद्विरुध्यते। यच्चावदानाभिघारणासादनेष्वित्यत्र प्रवृत्तिक्रमनिरासेन मुख्यक्रमवशेन क्रमनिरूपणं, यच्च बर्हिस्तद्धर्माणामङ्गप्रधानसाधारण्ये लिङ्गमुक्तं तच्चत्समानन्यायस्य प्रयाजशेषाभिघारणस्य स वै ध्रुवामेवाग्रेऽभिघारयति। ततो हि प्रथमावाज्यभागौ यक्ष्यन् भवतीत्याज्यभागार्थत्वं दृश्यत इति तत्सर्वमसति हविःसंस्कारार्थत्वे न घटते कपिञ्जलवच्च त्रिष्वेव बहुवचनस्य चरितार्थत्वात्। अधिकानां सन्निहितानामपि हविषां नाभिघारणं स्यादतश्च यत्पूर्वं ग्रन्थे सर्वहविष्षु प्रतिपाद्यत इत्युक्तं तदयुक्तं स्यादित्यत आह—'उपादीयमानत्वाद्धविषां

(१) 'यत्किंचिद्द्रव्यं प्रतिपादनीयं' इतिग्रन्थो मुद्रितटुप्टीकाग्रन्थे नोपलभ्यते। (२) टु० टी० पृ० १३।

संख्या विवक्षिता'(१)। यद्युपादीयमानत्वं हविषां स्यात्ततः संख्या विवक्षिता स्यान्न तु तदस्तीत्याचार्योक्तिरियं(!)व्याख्येया। अन्यथासकलपूर्वोक्तदोषापत्तेः। न च हविषां प्रधानयागाद्युपयोगिनामन्यत्र शेषभाव उपादानं वा युक्तम्। तेन प्रयाजशेषप्रतिपत्त्यर्थस्याभिघारणस्य हविरधिकरणनियमस्य प्रयोजनापेक्षायां हविर्गतमेव प्रयोजनं कल्प्यते। तेन स्विष्टकृदादुभयसंस्कारः स्यादिति तदुभयार्थं प्रयाजशेषाभिघारणं स्वरूपेण प्रयाजशेषार्थं नियमांशेन च हविःसंस्कारार्थम्। हविषः संस्कार्यत्वेन चाविवक्षितैव संख्या। तेन संस्कारालोपार्थं सन्निहितेषु सर्वहविष्षु व्यधिकेषु तदूनेषु च कर्त्तव्यम्। न चैवं विप्रकृष्टानामपि प्राजापत्यवपानामभिघारणं स्यादिति वाच्यं तेषां नियमाविषयत्वात्। येषां ह्यनियमेन प्राप्तिः प्राग्विधेः स नियमविधेर्विषयः प्रयाजेषु च कृतेषु तत् शेषस्याज्यभागद्रव्यासंसर्गार्थं सन्निहिते यत्र क्वचन प्रतिपादनं प्राप्तं नासन्निहिते तेनासन्निहितानां प्राजापत्यवपानां प्राप्तिरेव नास्तीति नियमविध्यगोचरत्वात् न नियमप्रयोजनं संस्कारभागित्वम्।

यत्तूद्देश्यद्वयं नैकस्मिन् वाक्ये समवैतीति। सत्यम्। निरपेक्षं न समवैति, साकांक्षं तु निमित्तफलमुद्देश्यद्वयमपि न वाक्यं भिनत्ति। अस्ति च प्रयाजशेषार्थेऽप्यभिघारणे विहिते किमभिघारयितव्यमित्यपेक्षा। तत्र हविरिति सम्बध्यमानं न

---

(१) टु० टी० पृ० १३।

वाक्यं भिनत्तीति सर्वमनाकुलम्।

यस्त्वाह—एकमेव हविरभिघारयितव्यं प्रतिपत्तेरेकाधारकत्वादेकस्मिन्नेव क्षपितस्यान्यत्रावक्षारयितुमशक्यत्वात्। बहुवचनं त्वनियमाभिप्रायेणैकमपि हविर्न नियतं किं तु यत्किंचित्तेन बहुषु प्रयोगेषु बहूनामभिघारणं संपद्यत इत्यभिप्रेत्य बहुवचनमिति स वक्तव्यः। किमिदानीं सोमोपि समाख्यावचनवषट्कारहोमाभिषवनिमित्तभक्षाणामेकेनैवैकस्मिन् प्रयोगे क्षपयितव्यः। ओमिति चेत्—तर्ह्यध्वर्युः पूर्वो भक्षयेत् होता वा मंत्रवर्णादित्यादिक्रमविचारो दत्तजलांजलिः स्यात्। अथ तत्र समाख्यादिभिः सर्वेषां प्राप्तेः सर्वैरेव समुच्चितैरेव यतः सोमस्य प्रतिपत्तिः क्रियेत इत्युच्यते ततोऽत्रापि बहुवचनबलाद्बहुषु हविःष्ववयवश एव प्रयाजशेषः क्षारयितव्यः। अथात्राविवक्षितं बहुत्वं को हेतुः? संस्कार्यत्वमिति चेत्—सुतरां सर्वेषामभिघारणं संस्काराविलोपार्थं कर्त्तव्यम्। कथं च भवान् सद्दध्रुवायैवाग्रेऽभिघारयतीति बह्वपेक्षं क्रमवचनं समर्थयेत्। न च प्रतिप्रस्थिर-योजिका धारणस्येत्यावेदितं न्यायरत्नमालायाम्। न [illegible]शेषस्य धारणं प्रसज्यते। क्रतुपशुवपास्वेव तन्निर्द[illegible]क्तमेव यतः।

केन च तस्य धारणम्? न तावत् जुह्वा [illegible]। [illegible] पात्रांतरेण तर्हि तत्र जुह्वाः समानेतव्यः शेषः। [illegible] स्मिन्नभिघारणकार्यस्य जुहूविरोचनस्य [illegible]

व्यमित्यधारणमेव तस्मात्सन्निहितानां सर्वेषामेवाभिघारणं न्याय्य मित्यलमतिविस्तरेण ।

एवं तावत् कृतार्थस्य प्रतिपत्त्यपेक्षत्वात्तदर्थमभिघारणमि त्युक्तमितश्चैवमित्याह—'जुह्वा च रिक्तया प्रयोजनमस्ति'(१) यदाज्यभागद्रव्यं 'तया'(२) जुह्वा 'होष्यते, तत्कथमसंसृष्टं'(३) प्रयाजशेषेण 'स्यादिति । तस्मात् प्रतिपत्तिरपेक्षिता, हविःसंस्कारस्य त्वनपेक्षितत्वात्'(४) । तादर्थ्येऽभिघारणस्य 'अदृष्टं कल्प्यते'(५) । 'ततो हवींष्यप्रयोजकानि'(६) । कथं तर्हि द्वितीया ? अत आह–'अधिकरणत्वमेव त्वत्र विवक्षितं(७) न तु व्याप्यमानत्वम्' । अभिघारणं हि कस्य चिदुपरि द्रव्यान्तरस्य क्षेपस्तद्यस्योपरि क्षिप्यते तत् क्षिप्यमाणेन व्याप्यमानमप्यधिकरणं भवति । तत्र शब्दोक्तमपि व्याप्यमानत्वमनपेक्षितमित्यनादृत्य अधिकरणत्वमेव लाक्षणिकं परिगृह्यते । तेनायमर्थः–प्रयाजशेषं हविःषु क्षारयेदिति । तदप्रयोजकानि हवींषीतिसिद्धम् ।

*१४. समानयनस्याज्यधर्मप्रयोजकताधिकरणम् ।*

## समानयनन्तु मुख्यं स्यात् लिङ्गदर्शनात् ॥४०॥

---

( १-२ ) अत्र लेखट्टुप्टीकापुस्तके 'प्रयोजनं यत्तया होष्यते' इति पाठः ।

( १-६ ) टु० टी० पृ० १३-१४

( ७ ) लेखपुस्तके 'अधिकरणत्वमेव त्वविवक्षित'मिति पाठः ।

समानयनं किमाज्यतद्धर्माणां प्रयोजकमुत नेति। तदर्थं च चिंतयितव्यं किमुपभृति द्वे चतुर्गृहीते प्रयाजानुयाजार्थे तयोरनुयाजार्थस्येदमुपयोक्ष्यमाणस्यादृष्टसंस्कारार्थं क्षारणमात्रमुत प्रयाजार्थस्योपरितनं प्रयाजद्वयं यष्टुमिति। संस्कारमात्रार्थत्वे अप्रयोजकं, पक्षान्तरे तु प्रयोजकम्। तत्सिद्ध्यर्थमप्येतच्चिंतनीयं- किं यदेतदुपभृति प्रयाजार्थं चतुर्गृहीतं तत्सर्वप्रयाजार्थमुत चतुर्थोत्तमार्थमेवेति। यदि सर्वार्थं ततः सर्वादौ समानीतत्वान्न बर्हिरारम्भसमये प्रयाजार्थमुपभृत्याज्यमस्ति यत् समानीयेत। अतोऽनुयाजार्थस्यैव समानयनम्। तदा च जौहवौपभृतयोश्चतुर्गृहीतयोर्द्वयोरपि सर्वप्रयाजविषयत्वाद्विकल्पः। चतुर्थपंचमप्रयाजार्थत्वे त्वौपभृतस्य जौहवस्याद्यप्रयाजत्रयविषयत्वेन द्वयोर्भिन्नविषयत्वात्। समुच्चये सति जौहवेन त्रीनिष्ट्वा बर्हिःकाले समानयनमौपभृतस्य जुह्वामुपरितनप्रयाजद्वयार्थं क्रियत इति।

अत्र पूर्वपक्षभाष्यं-'अप्रयोजकं समानयनम्'(१)। कुतः, 'प्रयाजानुयाजार्थस्याज्यस्यायमेकदेशः समानीयते इति पूर्वेण न्यायेनाप्रयोजकतेति'(२)। तस्य किलायमभिप्रायः—यदौपभृतं प्रयाजानुयाजार्थं द्रव्यं तस्य य एकदेशः प्रयाजार्थः सोऽयमानीयत इति। तदाक्षिपति-'अयुक्तोऽयं ग्रथः'(३)। किमित्याह-'यदि प्रयाजानुयाजार्थमेतत्' (४)द्रव्यं यत् समानयिते ततः 'प्रयाजा आत्मीयं द्रव्यं प्रयुञ्जत एव कथमप्रयोजकता। अतः पूर्वेण'(५)

(१-५) तु० टी० पृ० १४। (२) शाबर पृ० ४६०।

प्रयाजार्थत्वाभिधानेनो'त्तरम'(१)प्रयोजकत्वाभिधानं 'न सम्बध्यते'(२)। तस्मादयुक्त इति ।

'तत्र कैश्चित्प्रयाजशब्दं त्यक्त्वानुयाजार्थस्यायमेकदेशः समानीयत इत्येवं ग्रन्थो नीतः'(३)। प्रयाजार्थस्यौपभृतैकदेशस्य सर्वादौ समानीतत्वात् बर्हिःकाले केवलानुयाजार्थमेवोपभृति विद्यत इति प्रमादपाठः प्रयाजशब्द इति ।

'अपरैः प्रयाजानुयाजार्थस्यायमेकदेशः समानीयत इति' (४)अपरित्यज्यैव प्रयाजशब्दं सप्तम्यन्तं व्यस्तमाश्रित्य यथोक्त एवार्थे ग्रन्थो नीतः ।

अन्ये तु पूर्ववत्प्रयाजशब्दत्यागेन ग्रन्थं व्याचक्षाणाः पूर्वपक्षरूपमन्यादृशमाहुरित्याह—'अन्यैस्तु यदुपभृति गृह्णात्यनुयाजेभ्यस्तद्गृह्णातीति'(५) वचनात्केवलानुयाजार्थमेवौपभृतमप्रगृहीतमित्य'नेनो'परितनाधिकरण'पूर्वपक्षेणात्र पूर्वपक्षः कृतः'(६)। तदा हि—केवलानुयाजार्थस्येदं समानयनमप्रयोजकमाज्यस्येति ।

'त्रीण्येतानि मतान्ययुक्तानि । एकैर्ग्रन्थः परित्यक्त'(७)स्तेषां स एव दोषः । 'अपरैरधिकरणत्वमसम्भवि प्रयाजानां निर्दिष्टम्'(८)। न ह्याज्याधारत्वं क्रियारूपाणां प्रयाजानां सम्भवति। प्रयाजशब्देन तु तत्साधनद्रव्यलक्षणायां स एव दोषः । 'अन्येषां'(९) तृतीयपक्षवादिनां 'ग्रन्थपरि-

(१-९) दु० टी० पृ० १४ ।

स्यागस्तदवस्थ एव'(१)। अयं चापरो दोषः। 'असिद्धेनासिद्धं साध्यते'(२)। न ह्यौपभृतस्योपरितनाधिकरणन्यायसिद्धो-भयार्थत्वस्य केवलानुयाजार्थत्वं सिद्धान्तिनः सिद्धम्। अतः कथं तेनासिद्धेनासिद्धमप्रयोजकत्वं साध्यते। न ह्यसिद्धो हेतु-र्भवति। 'तस्मादर्थग्रन्थानुरोधेनैव वर्ण्यते'(३)। अर्थ-प्रधानो हि ग्रन्थोऽनुरोद्धव्यस्तेनोपपन्नेऽर्थे कथं चित् ग्रन्था-भिप्रायं व्याख्यातुमर्थस्तावदेवं वर्ण्यते—'उपभृति द्वे चतुर्गृहीते प्रयाजानुयाजार्थे'(४)स्तः। तत्र यत् प्रयाजार्थं तत् सर्वप्रयाजार्थं न केवलं चतुर्थोत्तमार्थमिति प्रतिपादयति—'प्रयाजानुयाजेभ्य-स्तद्गृह्णातीति समासोऽयं, तत्र प्रयाजप्रातिपदिके विभक्तिर्न श्रूयते। भवितव्यं च तया। तस्मादुत्तरपदे'(५)ऽनुयाजपदे 'या विभक्ति'(६)र्बहुवचनरूपा 'सा तंत्रेण'(७) प्रातिपदिकद्वयेऽपि 'द्रष्टव्या'(८)। प्रयाजेभ्यश्चानुयाजेभ्यश्चेति। कुतः 'श्रुतत्वात्तस्याः। अन्यस्यां'(९) तु द्विवचनरूपायां प्रयाजप्रातिपदिके विभक्तौ 'आनीयमानायां श्रुतहानमश्रुतकल्पना च स्यात्तस्मात् प्रयाजे-भ्य इति बहुवचनसामर्थ्यात् सर्वेषां प्रयाजानामौपभृतम्'(१०)।

नन्वेवं तेनैव सर्वप्रयाजावरोधात् जौहवमनर्थकं स्यादत आह—'जौहवं च'(११) सर्वेषामिति चेन्याकृष्यते। प्रयाजेभ्य इत-विशेषविधानात्, विकल्पेनोभयोरर्थवत्ता भविष्यतीत्यभिप्रायः।

---

(१–११) तु० टी० पृ० १४।
(३) अत्र मुद्रितपुस्तके 'अन्यथा' इत्यधिकः पाठो दृश्यते।

यदि सर्वार्थमौपभृतं ततः किं तत्राह—'जुह्वा जुहोतीति वचनाद्यस्मिन्नेव काले प्रयाजान् जुहोति तस्मिन्नेव काले यदौपभृतं प्रयाजार्थं द्रव्यं तद् जुह्वामानयति'(१)। न ह्यन्यथा तया होतुं शक्यते। एवं च सत्य'प्रयोजकं समानयनं'(२) भवतीतिभाष्यव्याख्यानेन दर्शयति—'अत उत्पत्त्यपेक्षाया'(३)प्राज्योत्पादनकाले 'यदुपभृति'(४) 'प्रयाजानुयाजार्थं द्रव्यं गृहीतमभूत् तदस्मिन् काले अतिहाये डो बर्हिः प्रतिसमानयतीत्येतस्मिन् बर्हिरारम्भकाले सर्वप्रयाजानामादावेव प्रयाजार्थस्या'(५)ज्यस्य 'समानीतत्वात् नोभयार्थतया विद्यत इत्यनुयाजार्थं'(६)मर्द्धं 'केवलमिदानीमास्ते तत्समानीयमानं'(७) किञ्चित् क्षार्यमाणमित्यर्थः। न हि तत्सर्वं समानीयते। तत्समानीयमानमिति विशेषणप्रधानो निर्देशः। तस्य समानयनं क्रियमाणमित्यर्थः। 'परकीयत्वा'(८)दनुयाजार्थत्वाद्र द्रव्यस्य तत्संस्कारकत्वाद'प्रयोजक'(९)माज्यस्य। किमर्थं पुनस्तस्य समानयनं ? न ह्यकृतार्थस्य प्रतिपत्तिरपेक्षिता। न चान्यदपि प्रयोजनं दृश्यतेऽत आह—'अदृष्टार्थं च'(१०)। अनुयाजार्थद्रव्यविषयत्वात्, तदर्थं तावत्समानयनम्। अतो दृष्टाभावाददृष्टं कल्प्यमिति। भाष्यस्यायमर्थः-प्रयाजानु-

---

(१-२) टु० टी० पृ० १४। (३) शाबर० पृ० ४६०।
(४-९) टु० टी० पृ० १४-१५।
(१०-११) शाबर० पृ० ४६० टु० टी० पृ० १५

याजार्थं यदाज्यमासीत्तस्यैकदेशे प्रयाजार्थे पूर्वमेवानीते सति यस्मात्सन्निहित एकदेशः केवलानुयाजार्थोऽदृष्टसंस्कारार्थं समानीयते, किञ्चित् क्षार्यतेऽतः परकीयद्रव्यसंस्कारकत्वादभिघारणवदप्रयोजकं समानयनमिति ।

के चित्त्वाहुर्जौहवस्य सर्वप्रयाजार्थस्य बर्हिरारम्भसमये सर्वार्थेनौपभृतेन संसर्गोऽदृष्टार्थः क्रियते । तेनौपभृतमदृष्टार्थतया सर्वप्रजायार्थं जौहवं तु दृष्टार्थतयाऽतः समुच्चय एव पूर्वपक्षेऽपि तयोरतः प्रयाजानुयाजार्थस्येति यथाश्रुतमेव भाष्यम् । कथं तर्ह्यप्रयोजकत्वं ? तत्राहुः-औपभृतस्य हि प्रयाजेष्वदृष्टं कार्यमित्युक्तम् । अनुयाजानां तु दृष्टोपकार्यौपभृतं दृष्टादृष्टयोश्च दृष्टं प्रयोजकमित्यनुयाजार्थमेवौपभृतस्य प्रयोजकम् । प्रयाजार्थं तु समानयनमदृष्टार्थत्वादप्रयोजकमिति ।

तदयुक्तम् । केन पुनर्विशेषणप्रयोजनत्वाविशेषेऽपि दृष्टमेव प्रयोजकं नादृष्टम् । प्रथमावगतत्वादिति चेत्—युगपदेकेनैव प्रयाजानुयाजेभ्यस्तत् । गृह्णातीतिवाक्येनोभयार्थत्वात्रागमादुभयेषां प्रयोजकत्वं युक्तम् । यत्र हि शास्त्रमेवैकं शास्त्रान्तरप्रयुक्त्युपजीवनेन प्रवर्त्तते तत्राप्रयोजकत्वं, यत्र त्वेकप्रयुक्तिमनपेक्ष्यैकेन भिन्नेन वा शास्त्रेणान्यत्र विनियुज्यते न तत्र दृष्टादृष्टत्वमात्रेण कश्चिद्विशेष इति सर्वेषामेव प्रयोजकत्वं युक्तम् । तस्माद्यथोक्त एव पूर्वपक्षः ।

'सिद्धांतस्तु यदौपभृतं समानयति जुह्वां तदतिहाये डो व-

हिरिसास्मिन् काल'(१) इत्यर्थमात्रं यत् प्रयाजार्थस्यौपभृतस्या-ज्यस्य जुह्वासमानयनं तस्य 'कालनियमो'(२) 'अनेन'(३) 'विधीयते'(४)। लाघवादृष्टार्थत्वाद्यानुयाजार्थस्य त्वमास्ति स-मानयनेऽस्मिन् काले विधीयमाने विशिष्टविधानात् गौरवमदृष्टा-र्थता च स्यात्। 'तस्मात् प्रयाजत्रयस्य'(५) आद्यस्य 'जौहव-द्वयोरौपभृतम्'। कुतः(६) 'अतिहाये डो बर्हिः प्रतिसमानय तीति'(७)। समानयनकालविधानात्तस्मिंश्च काले समानीतेन पूर्वेषां कर्तुमशक्यत्वादन्त्ययोरेव द्वयोरौपभृतम्। एवं च विशे-षणविहितमपि जौहवं द्वयोरौपभृतेनावरुद्धकत्वादितरविषयं भवति। एवं च विकल्पोऽप्यष्टदोषः परिहृतो भवतीत्याह—'सत्यपि तुल्यकार्यत्वे'(८) यद्यप्युभयोः प्रयाजकार्यता तुल्या तथापि नास्ति विकल्पो भिन्नविषयत्वात्'(९)। जौहवस्याद्यत्रयविष-यत्वात्। औपभृतस्यान्त्यद्वयविषयत्वात्। एव च लिंगमप्याति-थ्यायां चतुर्गृहीतबहुत्वं समर्थितं भवतीत्यभिप्रायः। विकल्पे हि तयोरन्यतरस्मिन्ध्रौवे च गृह्यमाणेऽनुयाजार्थस्य चतुर्गृहीतस्ये-हातायामातिथ्यायामभावात् द्वे एव चतुर्गृहीते इति तद्बहुत्वदर्शने नोपपद्येत। समुच्चये तु सति जुह्वामेकं चतुर्गृहीतं प्रयाजार्थमुप-भृति चानुयाजाभावात् प्रयाजार्थं चतुर्गृहीतमेकं ध्रौवं चापरमिति बहुत्वं समर्थितं भवति।

---

(१-९) टु० टी० पृ० १५

यत्तु श्रुतस्यैव बहुवचनस्य प्रयाजशब्देनाभिसम्बन्धात् सर्वेषामौपभृतं न द्वयोरेवेत्युक्तं तत्राह–'समासेऽपि'(१)। यद्यप्येकैव विभक्तिर्द्वाभ्यां परा तथापि 'द्वयोरन्त्ययोरौपभृतस्य प्रमाणान्तरेण कालविधिनावगतत्वात् विरोधात् न श्रुता विभक्तिः'(२) प्रयाजप्रातिपदिके 'गृहीतव्या'(३)। किं तु 'द्विवचनमध्याहियते प्रयाजाभ्यामिति तस्मात्प्रयोजकं'(४) समानयनम्।

## १५ औपभृतजौहवयोः क्रमेणोभयानुभयार्थताधिकरणम्।

### ( पूर्वपक्षसूत्रम् )

## तत्रोत्पत्तिरविभक्ता स्यात् ॥ ४२ ॥

ननु गतस्तृतीयविषय इत्युक्तं तत् कथमिह पुनस्तादर्थ्यचिन्तनमित्याशङ्क्याह–'(५)प्रसक्तानुप्रसक्तेनारभ्यते सत्याज्यप्रयोजकत्वे' समानयनस्य ह्यौपभृताज्यप्रयोजकत्वे साधिते तत्प्रसङ्गेनौपभृतस्य तादर्थ्यं चिन्त्यते। तदनुप्रसङ्गेन च तुल्यकारणस्य जौहवस्य ध्रौवस्य चेति।

नन्वौपभृतस्यासिद्धे प्रयाजार्थत्वे कथं समानयनस्य प्रयोजकत्वमुक्तं–तत्राह–'स्थिते चास्मिन् पूर्वाधिकरणारम्भः(६)'।

इदमर्थतोऽधिकरणं पूर्वमसंगतिप्रसङ्गात्तु न पूर्वमारब्धमिति। पूर्वपक्षमाह–'असंयुक्तोत्पन्नानि सर्वाण्याज्यानि प्रकरणेन गृह्यते

( १-६ ) टु० टी० पृ० १५-१६।

तस्मात् यद्यदाज्यसाध्यं(१)' कार्यं प्रयाजानुयाजादि 'तत्र तत्रैतानि(२)' । बहुवचनं ध्रौवापेक्षम् ।

भाष्ये च जौहवौपभृतग्रहणं ध्रौवस्यापि प्रदर्शनार्थं तुल्यन्यायत्वात् । उभयार्थत्वाभिधानं च सर्वाभिप्रायम् । वाक्यानि चानुवादतया नेतव्यानि । विधित्वे सति यदुपभृति गृह्णात्यनुयाजेभ्यस्तदितिवचनात् औपभृतमपि केवलानुयाजार्थं स्यात् । तच्चानिष्टम् । अथ तस्यानुवादत्वम् । तथा सतीतरेषामपि तत्स्यादित्येतावान् पूर्वः पक्षः ।

( सिद्धान्तसूत्रम् )

## तत्र जौहवमनुयाजप्रतिषेधार्थम् ॥ ४३ ॥

'चतुर्जुहां गृह्णातीत्युत्पद्यमानं जौहवं प्रयोजनमभिलषति किं मया कर्तव्यमिति(३)' । 'प्रयाजाश्चोत्पद्यमाना एव द्रव्याभिलाषिणः(४)' । तत्र यावदेव सर्वार्थताप्रकरणेन कल्प्यते तावदेव 'तयोर्जौहवप्रयाजयोः 'श्रुतेन वाक्येन(५)' सम्बन्धे विहिते 'द्वयोरपि परस्परनियमादन्यत्र(१२)' प्रयोजनान्तरे जौहवस्य प्रयाजानां च द्रव्यान्तरे 'प्रसङ्ग एव नास्ती(६)'ति जौहवस्य तावत् केवलप्रयाजार्थत्वम् । 'एवं ध्रौवौपभृतयो(७)'- रौपभृतमपि प्रयाजानुयाजेभ्य इति वचनादुभयार्थमेव न सर्वार्थम् । एवं च सति प्रयाजानुयाजानां जौहवौपभृतावरुद्धत्वाद-

(१-७) तु० टी० पृ० १५-१६ ।

विशेषविहितमपि ध्रौवं तदतिरिक्तोपस्तरणाभिघारणाज्यभागार्थमेव न त्वत्यन्तं पारिप्लवम्। यदि नियमविधानार्थानि वचनानि कथं तर्हि प्रतिषेधार्थं वचनमितिसूत्रं तत्राह-'एवं चेत्(१)' यदा नियमविधानात् प्रसङ्ग एवान्यत्र नास्ति तदा 'प्रतिषेधफलत्वात् नियम एव प्रतिषेध उक्तः(२)'। न तु मुख्यः प्रतिषेधो विधिसरूपत्वात् वाक्यानामिति।

## औपभृतं तथेति चेत्(३) ॥४४॥

इति पूर्वपक्षान्तरसूत्रम्। तस्यार्थमाह-(४)'यदि श्रुतेनैवार्थेन' नैराकांक्ष्यान्नान्यार्थत्व(५)'माज्यानां तर्हि 'उपभृतमपि(६)' अनुयाजेभ्यस्तद्गृह्णातीतिवचनात् केवला'नुयाजार्थत्वेन निराकांक्षीकृतत्वात् न प्रयाजार्थं स्यात्(७)'।

## स्याज्जुहूप्रतिषेधान्नित्यानुवादः ॥ ४५ ॥

'प्रयाजानुयाजार्थत्वेऽवधृते ज्ञायत एवैतदनुयाजार्थमिति(८)'। तेन प्रयाजानुयाजेभ्यस्तदितिवचनात् प्राप्तमनुयाजार्थत्वमनेनानूद्यते नानेन प्रयाजार्थतावचनविहिता व्यावर्त्तयितुं शक्यते। कस्मात्पुनर्विपर्ययो न भवत्ययं विधिः सोऽनुवाद इति तत्राह-'यदि ह्यनुयाजार्थमेवैतत्ततः प्रयाजार्थमित्यशक्यं वक्तुम्(२)', अप्राप्तत्वात्। 'तस्मादयमनुवादोपि न घटते।

(१-२) टु० टी० पृ० १५-१६।
(३) सूत्रञ्चैतट्टुप्टीकाकारैर्धृतम्। (४-२) टु० टी० पृ० १५-१६।

तस्मात्प्रयाजानुयाजेभ्यस्तद्गृह्णातीत्यस्यात्यन्तानर्थक्यात्(१)'। अनुवादत्वेनाप्यर्थवत्त्वासम्भवादवश्यं भाविनि विधित्वे सति तत्र एव प्राप्तत्वा'दितरो(२)'ऽनुयाजेभ्यस्तद्गृह्णाती'त्यनुवादः(३)। उभयार्थत्वविधिना ह्यन्यतरार्थत्वमपि प्राप्नोति न त्वन्यतरार्थत्वविधेरुभयार्थत्वप्राप्तिस्तस्मान्न विपर्ययः सम्भवतीति।

सूत्रार्थस्तु-जौहवं हि केवलं प्रयाजेषु नियतं, अनुयाजेभ्यः प्रतिपिद्धं निवृत्तं नौपभृतं तदपेक्ष्यायं नित्यानुवादः। जौहवं हि केवलं प्रयाजार्थमिदं त्वनुयाजार्थमपीति।

## १६ उपभृति द्विचतुर्गृहीताचरणाधिकरणम्।

## तदष्टसंख्यं श्रवणात् ॥ ४६ ॥

इदमपि प्रासङ्गिकमेवाधिकरणम्।

पूर्वपक्षमाह-'अष्टसंख्याविशिष्टं ग्रहणमुत्पद्यते(४)'। एकमेव ग्रहणमष्टावुपभृति गृह्णातीत्यष्टसंख्याकं श्रूयते, न तु चतुःसंख्याकं ग्रहणद्वयम्। 'तत्र यथा न चत्वारि चतुर्गृहीतानि सन्ति(५)' अश्रुतत्वादेवं 'द्वे चतुर्गृहीते न स्तः(६)', अश्रवणाविशेषात्। 'लक्षणया तु गम्यते'(७) द्वे चतुर्गृहीते 'श्रुतिसम्भवे चायुक्ता लक्षणा(८)'। 'तस्मा(९)'देकमेवेद 'मष्टगृहीतं प्रयाजानुयाजार्थमिति(१०)' समानवचनाधिकरणन्यायेनार्द्धमुपरितनयोः प्रयाजयोरर्द्धं चानुयाजेषु विनियोक्तव्यम्। न चा-

(१-१०) टु० टी० पृ० १६।

र्द्धोपयोगेऽष्टगृहीतस्य यागांगत्वं विरुध्यते । यथैव जौहवेन चतुर्गृहीतेनाद्यप्रयाजत्रये पर्यायेणावयवशः क्रियमाणेऽपि सर्वेषां चतुर्गृहीतसाधनत्वमविहतं चतुःसंख्याकमेव हि तस्य ग्रहणमासीदिति तथाष्टगृहीतद्रव्यकत्वं तदवयवेनापि क्रियमाणानां प्रयाजानुयाजानामविरुद्धम् । 'एवं चेदनुयाजाभावे(१)'-प्यातिथ्यादाव'ष्टसंख्यापरिच्छेद्यमेव(२)' प्रयाज'साधनम्(३)' । अतस्तत्राप्यष्टसंख्याकग्रहणमेवोपभृति कर्त्तव्यम् ।

चोदयति–'प्रयाजानुयाजयोश्चतुर्गृहीतयोरुपभृदाधार इति चेत्(४)' । यद्यत्र संख्याविशिष्टं ग्रहणं विधीयेत ततः श्रुतिरष्टासंख्या सम्बध्येत न त्वेवं किं तु चतुःसंख्याकमेव प्राप्तं प्रयाजानुयाजांगग्रहणद्वयमनूद्योपभृदाधारमात्रं तत्र विधीयते । अनुवादश्च प्राप्तिपूर्वकः । प्राप्तिश्च चतुःसंख्याकस्य ग्रहणद्वयस्य नाष्टसंख्याकस्येति तल्लक्षणार्थोऽष्टशब्द इति ।

परिहरति–'तन्न(५)' । कुतः । 'संख्याधारविशिष्टमेवात्र ग्रहणमुत्पद्यते(६)' । न हि वचनान्तरं ग्रहणस्य तत् संख्याया वा विधायकमस्ति । 'अतोऽष्टसंख्याविधीयमानत्वात् नानूद्यते । अनुवादाभावाच्च न शक्येते द्वे चतुर्गृहीते लक्षयितुम्(७)' । न हि तदा श्रुतिपरित्यागे कारणमस्तीति ।

## अनुग्रहाच्च जौहवस्य ॥ ४७ ॥

समानयते जुह्वामौपभृतं चतुर्गृहीतत्वायेति । 'न तावत्स-

(१-७) दु० टी० पृ० १६-१७

मानयनेन चतुर्गृहीतत्वं भवति । पूर्वमेव(१)'समानयना'त्त-स्य(२)'जौहवस्य 'चतुःसंख्यया परिच्छिन्नत्वात्(३)' । तेन चतुर्गृहीतस्यानुग्रहायेत्यर्थः । महता चानुग्रहोऽल्पस्य भवति । स चौपभृतस्य चतुर्गृहीतत्वेन घटत इत्याह–'इतरस्य' (४)चौपभृतस्य 'चतुःसंख्यत्वे'(५) सति 'कीदृशे अल्पत्वम-हत्वे । यदि त्वष्टसंख्यापरिच्छिन्नमौपभृतं तत इतरस्य'(६) जौहवस्या'ल्पत्वा(७)'त्तेन 'महताऽनुग्रहः क्रियते समान-यनेन । तस्माद(८)'नुग्रहदर्शना'दष्टगृहीतं चतुर्गृहीतापेक्षया महदुच्यते । तेनाष्टगृहीतत्वं ज्ञापयति'(९) । न ह्यन्यथा महत्त्वं भवतीति ।

## द्वयोस्तु हेतुसामर्थ्यं श्रवणञ्च समानयने ॥ ४८ ॥

'द्वे एव चतुर्गृहीते(१०)'होमांगे 'कुतःॽअनारभ्य विधा-नाद्धि होममात्रे चतुर्गृहीतं(११)'मात्तम् । 'तत्र होमश्चतुःसंख्या-परिच्छिन्नं(१२)'किमप्या(१३)'ज्यादि 'साधनमाकांक्षति' (१४)। द्रव्यविशेषमेव केवलमाकांक्षति, 'न संख्या(१५)'-मनारभ्य विधानादेव सिद्धत्वादित्यर्थः । 'अष्टावुपभृति गृह्णा-तीत्यस्या(१६)'प्याज्यस्य प्रयोजनं प्रति 'साकांक्षत्वं(१७) प्रयाजानुयाजाश्च प्रयोजनं नीयते'* यस्मात् द्रव्यविशेष एवा-पेक्षितो न संख्या 'तस्माद्यद्यप्यौपभृते(१८)'ऽष्ट'संख्यास्ति,

( १-१८ ) तु० टी० पृ० १७ ।

* अत्र मुद्रितपुस्तके 'दीयते' इति पाठो दृश्यते ।

तथाऽपि(१)'पूर्वमेवानारभ्य विधिप्राप्तायाश्चतुर्गृहीतसंख्याया आस्तित्वा(२)'त्तामनादृत्य 'द्रव्यमेव गृह्यते(३)'। अस्तीत्यव्ययमाख्यातप्रतिरूपकं। अष्टसंख्यायास्तर्हि श्रुतायाः का गतिः। सा हि होमार्थत्वेन विनानर्थिका स्यादत आह—'अष्टसंख्या श्रुतिवृत्ताऽपि न सम्बध्यते होमेन(४)' कुतः 'संख्यान्तरेण(५)' चतुष्ट्वेन होमस्य 'अवरुद्धत्वात्। तस्मादष्टसंख्या द्वेचतुःसंख्ये लक्षयति(६)'।

अथानारभ्यवादगतं चतुष्टमेवाष्टसंख्यालक्षणार्थं कस्मान्न भवत्यत आह—'न तु चतुःसंख्याऽष्टसंख्यां लक्षयितुं समर्था, व्याप्त्यभावात्(७)'। अष्टत्वं तु चतुष्टद्वयाविनाभूतं तल्लक्षणार्थमिति युक्तम्। 'अथ वा किमत्रानारभ्य विधिना न्यायादेवायमर्थो लभ्यते। अष्टसंख्याग्रहणे(८)'ग्रहणगताष्टसंख्या 'यदा प्रयाजानुयाजेभ्यो वाक्येन दीयते तदा(९)' समं स्यादश्रुतत्वादिति 'न्यायादेव तत्रार्द्धमितरत्राप्यर्द्धं भवति। यथा लोके शतमाभ्यां दीयतामित्युक्ते(१०)' शतसंख्याकमपि द्रव्य'मर्पणवेलाया(११)'मेकैकस्मै 'पंचाशत्संख्यापरिच्छिन्नमर्पयति इति हेतोर्न्न तत्परिच्छिन्न(१२)'मष्टत्वपरिच्छिन्नं 'होमसाधनम्(१३)'।

यदा चतुर्गृहीतमेव होमे तदा ग्रहणस्य होमार्थत्वात्तद्गता-

(१-३) तु० टी० पृ० १७।
(१०) 'न्यायात्तावदेवेतरदिति' वा पाठः।
(४-१३) तु० टी० पृ० १७।

ऽष्टसंख्या चतुःसंख्याद्वयलक्षणार्थेव । यदि न्यायादेव होमे चतुःसंख्याप्राप्तिः कथं तर्ह्यनारभ्य विध्युपन्यासो भाष्येऽत आह- 'अनारभ्य वादेनापि योऽर्थो न्यायादेव प्राप्यमाणस्स एव प्राप्यते(१)' । तेनार्थाभेदात् यत्किंचित् प्रापकमुपन्यसितव्यमितिनारभ्य विध्युपन्यास इति ।

'नन्वेवमनारभ्य विधिः(२)' प्रयाजानुयाजविषयेऽ'नुवादः स्यात्(३)' । न्यायादेव प्राप्तिरन्यत्र च विधिरिति विरूपः स्यादित्यभिप्रायः । सत्यमनुवादो न त्वयं दोष इत्याह-'उच्यते, विवक्षाभेदेऽनुवादो दोषो भवति । न त्विह विवक्षाभेदः । य एवार्थो विधौ सोऽनुवादेऽपि' (४) । तेन प्राप्त्यप्राप्तिवशाद्विध्यनुवादत्वे सत्यपि वचोभंग्यभेदादवैरूप्यमिति तत् पुनरिदं न्यायप्राप्ताभिधानमनुपपन्नम् ।

यदि ह्यष्टसंख्याकमेव ग्रहणं ततस्तदेकदेशेऽप्येकैकत्रोपयुज्यमानेऽष्टगृहीतमेव होमसाधनं भवतीत्युक्तम् । न चानारभ्य विधिनाऽप्रकरणस्थेन सामान्यरूपेण विशेषविषयं प्राकरणिकं चाष्टत्वं लक्षणया नेतुं युक्तमित्याशंक्य पक्षांतरमाह-'अथ वा यत्प्रयाजानुयाजयोश्चतुर्गृहीतं गृह्णाति तदष्टासुप्रभृतीति नैव ग्रहणं विधीयते । ग्रहणे त्वर्थप्राप्ते'(५)ऽनारभ्य विधिविहितं चतुर्गृहीतस्य होमसाधनत्वं नाकृत्वा चतुःसंख्यं ग्रहणमनुष्ठातुं शक्यत इत्यर्थादेव ग्रहणं प्राप्नोति । प्राप्ते च तस्मिन् प्रयाजानुयाजांगचतुर्गृहीतद्रव्यानुवादेन 'एकपात्रता'(६)तन्त्रेण 'विधीयते (७)' । ते-

( १-७ ) टु० टी० पृ० १७ ।

नानुवादत्वाल्लक्षणा न दोषः। किमर्थं पुनरष्टसंख्या श्रुता, यद्यविधित्सिता चतुःसंख्याद्वयमेव कस्मान्न श्रुतमत आह—'अष्टसंख्याश्रवणात् भिन्नकालता नानापात्रता चोभयं निवर्त्यते(१)'। तच्छ्रवणे हि यथाष्टत्वं सम्पद्यते तथा चतुर्गृहीतद्वयं सम्पादयितव्यमिति कालपात्रैकत्वसिद्धिरत आह भाष्यकारः-'उपभृतिसमानीते'(२) सहानीते 'द्वे चतुर्गृहीते कथं स्याताम्। इतरथाऽसत्यष्टशब्दे नानापात्रयोर्गृह्येयाताम्'(३)कालभेदेन वा संसर्गपरिहारार्थं तदिदमुक्तं सूत्रकारेण—'श्रवणं च समानयने'(४) सहानयनार्थमष्टत्वश्रवणमित्यर्थः।

भवतु वा विधिरेवाष्टशब्दः श्रुतिष्टत्वश्च तथापि होमगतं चतुर्गृहीतं न बाधितुं शक्यमित्याह—'अथ वोपभृदष्टसंख्याग्रहणानि सर्वाण्यत्र विधीयन्ते। तस्यार्द्धं' (५)चतुःसंख्या 'होमे विधीयते। तस्माच्चतुःसंख्या होमेऽष्टसंख्या ग्रहणे(६)'। तेन 'द्वयोरपि भिन्नविषयत्वान्न विरोधः' (७)अविरोधाच्च 'नाष्टत्वेन चतुष्टं बाधितुं शक्यते, न च होमार्थत्वात्(८)' 'ग्रहणस्यार्थात् 'तुल्यार्थता प्राप्य बाधः। अङ्गगुणेन प्रधानगुणबाधस्यान्याय्यत्वात्। तेन ग्रहणगताष्टसंख्या चतुष्टद्वयनिष्पादकत्वेन होमांगं भवति'(९)न स्वरूपेण, 'तस्माच्चतुःसंख्याकं ग्रहणद्वयमेतदिति'(१०)।

यत्तु भाष्यकारेण प्रयोजनद्वयमुक्तं तत्र द्वितीयमेवाभिमतं

---

(१) तु० टी० पृ० १७। (२-३) शाबर० पृ० ४६४।
(४-१०) तु० टी० पृ० १७-१८।

न प्रथममिति प्रतिपादयन् प्रथमं दूषयति-'न नियोगतोऽर्द्धं'(१) समानेतव्यं पूर्वपक्ष 'इत्ययुक्तम्'। (२)कुतः-'न्यायादर्द्धमेव प्राप्नोति' (३)समं स्यादश्रुतत्वादिति। 'एवमपरितुष्टो द्वितीयं प्रयोजनमाह'(४)-'अनुयाजाभावेऽप्यष्टगृहीतमेव पूर्वपक्षे सिद्धान्ते चतुर्गृहीत'मिति(५)।

इति तन्त्ररत्ने चतुर्थाध्यायस्य प्रथमः पादः समाप्तः।

---

१ स्वरोश्छेदनाथप्रयोजकाधिकरणम्।

( पूर्वपक्षसूत्रम् )

स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ॥ १ ॥

पूर्वपक्षमाह-'यूपस्य स्वरुं करोतीत्यत्र करोतिरभूतप्रादुर्भाववचनो'(६) नादानार्थः। लक्षणाप्रसंगात्। तस्य 'किं कर्मेत्याकांक्षायां स्वरुमिति'(७) सम्बध्यते। 'तस्मात् सस्वरुर्भाव्यमानः। तस्य च'(८) भाव्यमानस्य 'करणेतिकर्त्तव्यताकांक्षायां यूपशब्दो जोषणादिकामितिकर्त्तव्यतां लक्षयति, खदिरादि च काष्ठं करणभूतं'(९) सम्बन्धात् तेन यूपस्य जोषणादिसंस्कृतस्य

(१-४) टु० टी० पृ० १७-१८।

(५) अत्र अनुयाजादारभ्य गृहीतमित्यन्तः पाठो मुद्रितलेखटुप्टीकायां नोपलभ्यते, किन्तु तत्रापेक्षित इव प्रतिभातीति।

(६-९) टु० टी० पृ० १८-१९।

खादिरादेरवयवं स्वरुं करोति जीवनादीतिकर्त्तव्यतोपेतेन खादिरादिना स्वरुं भावयेदित्यर्थः । एवं च सति 'या च यूपं तक्ष्णती'(१)त्यादिवाक्यविहिते'तिकर्त्तव्यता'(२) सा 'तस्यापि'(३) स्वरोर्वाक्येन'(४) विहिता भवति यूपस्येव । तस्मात् उभयमयुक्तं छेदनादीति ।

नन्वेवं यूपशब्दे लक्षणा स्यात् । सत्यं, न दोष इत्याह—'यदि च यूपशब्द इतिकर्त्तव्यतां न लक्षयेदनर्थकमेवास्योच्चारणं भवेत्' । न हि स्वरुभावनाविधौ तस्य श्रुत्यान्वयः सम्भवति । 'यत्स्वरुं करोति तद् यूपादिति चेत्'(५)–यदि स्वरुभावनाविधिर्भवेत् न संभवेत् श्रुत्यर्थः । अञ्जनवाक्येनैव तत्साधनत्वमात्रेणावगतस्य स्वरोरर्थप्राप्तमादानं यत् स्वरुं करोतीत्यनूद्य तत् यूपादिति विधौ संभवत्येवार्थ इति ।

परिहरति–'तन्न'(६) । कुतः ? 'एवं वाक्यार्थः स्यात्'(७) पदान्तरार्थविधानात् । 'स्वरुं भावयेदिति तु'(८) विधौ 'श्रुत्यर्थो' विहितो भवति ।

ननु लक्षणातो वाक्यार्थविधानमेव ज्यायः । सत्यं, सा तु पक्षद्वयसाधारणी । सिद्धान्तेऽपि हि करोतिरादानार्थो व्याख्येयः । तस्मात् श्रुत्यर्थविधिलाभात् स्वरुकर्त्तव्यतैव विधीयते इति ।

ननु स्वरुरपि पदान्तरोपात्त एव तत् कथं तत्र श्रुत्यर्थविधिरत आह–'करोति भावयत्यादीनां सामान्यधातूनां यत्

(१–८) द्र० टी० पृ० १८-१९ ।

द्वितीयान्तं तद्धातुस्थानीयं भवति द्रव्यं क्रिया वा' । (१) क्रिया तावत् श्रुत्या विधीयते। सा चावच्छेदकापेक्षा। यथा-यजेतेत्यादिषु यागाद्यवच्छिन्ना प्रतीयते तथा यागं करोतीत्यादिष्वपि करोतिना सामान्यरूपावगमात्। अवच्छेदकापेक्षा तुल्यैव। तत्र पदान्तरेणापि द्वितीयान्तेनोपनीतं यागादि तत्तदवच्छेदकत्वेन तत् संलग्नं प्रतीयते न तु कारकान्तरवत् बहिर्भूतमिति तदवाच्छिन्नायास्तस्याः श्रुत्यर्थत्वमुच्यते। तेनायं वाक्यक्रम इत्याह-'तस्माच्च'(२) स्वरुं करोतीति वाक्यात् स्वरुः 'कर्त्तव्यतां प्रतिपद्यते। तेन चोत्पन्नः'(३) स्वरुः 'स्वरुणा पशुमनक्तीत्यनेन विनियुज्यते'(४)। न त्वनेन विनियुक्तस्येतरेणोपादानविधिरिति। तस्मात्सप्रयोजक इतिकर्त्तव्यताया'(५)ः। एवं तावद्यूपशब्दलक्षितानां वाक्येनैव जोषणादीनां विनियोगः स्वरावप्युक्तः। इदानीं यूपशब्दो यद्यपि नात्रभवेत्तथापीतिकर्त्तव्यता लभ्यते इत्याह-'यद्यपि यूपेन सहैकवाक्यतेतिकर्त्तव्यतायास्तथाऽपि स्वरोः साकांक्षत्वात्तदीयेतिकर्त्तव्यता या निराकांक्षता'(६)। कुत इत्याह-'सन्निधानाविशेषात्'(७)।

ननु वाक्येन यूपसंयुक्तायाः कथं दुर्बलेन सन्निधानेन स्वरौ विनियोगोऽत आह-'याऽपि वाक्यसंयुक्ता साऽपि शक्याऽनुपक्तुं स्वरुशब्दस्यानर्थक्यभयात्'(८)। न सन्निधानाद्विनियोग उच्यते किं त्वनुषङ्गात्। छेदनादिना यूपं भावयेत्स्वरुं च तथैव भावयेदिति। एवं च यदा यूपशब्दाभावेपीतिकर्त्तव्यता ल-

(१-८) तु० टी० पृ० १९।

ष्यते तदा तत्रापि स्वरुवाक्ये यूपशब्दे श्रूयमाणे सुतरां 'भवतीतिकर्त्तव्यतासम्बन्धः' ।

## जात्यन्तराच्च शङ्कते ॥ २ ॥

'नान्यस्य'(१) खदिरादिभ्योऽन्यस्य देवदार्वादि '(२)वृक्षस्य स्वरुं कुर्यादित्यनुनिष्पन्नपक्षे' तज्जातीय'वृक्षान्तराशङ्काऽपि नास्ति नतरां जात्यन्तराशङ्का ।

प्रयोजनवादिनस्तु'(३) पृथङ्निष्पत्तित्वात् 'भवति जात्यन्तराशङ्का'(४) व्यक्त्यन्तराशङ्का च । 'तत्र सजातीयो विधीयते'(५) । यूपजातीयस्यैव कुर्यादिति ।

( सिद्धान्तसूत्रम् )

## तदेकदेशो वा स्वरुत्वस्य तन्निमित्तत्वात् ॥ ३ ॥

'स्वरुणा पशुमनक्तीत्युच्चरितेऽञ्जनसमर्थं द्रव्यं'(६) स्वरुरिति 'प्रतीयते । तद् कुत उपादातव्यमित्याकांक्षिते यूपादिति निराकांक्षीभवति'(७) ।

नन्वत्र यूपस्येति श्रूयते न यूपादिति तत्राह–'यूपस्येत्यवयवलक्षणा षष्ठी'(८) । यूपस्यावयवं स्वरुं करोति स्वरुत्वेनादत्त इति । एवं च पञ्चम्यर्थो लभ्यते इति यूपादिति व्याख्यातम् । तथा च शाकस्य देहि शाकाद् देहीत्येकार्थमेव मन्यन्ते । 'विद्यमाने चा-

---

( १-८ ) तु० टी० पृ० २० ।

वयन्तिप्यवयवा भवन्ति'(१) । अवयवचोदना हि नावयविनं प्रयुङ्क्ते । अन्यप्रयुक्तमेवोपजीवन्तीत्युक्तम् । 'तस्माच्छेदनादीनाम- प्रयोजकः स्वरुः अलौकिकत्वात् भाव्यत इति चेत्'(२)—

न ह्यलौकिकस्याविज्ञातस्वरूपस्योपादानं प्राप्तं यत्तदनुवादेन युपादितिविधीयेतातः तत्स्वरूपभावनैव विधातव्या । तद्विधाने च छेदनादीनामितिकर्तव्यतात्वेन सम्बन्धात् प्रयोजकत्वमिति ।

उत्तरं-'*नैवायमलौकिको रथन्तरादितुल्यः*'(३) । *यथा रथ- न्तरादिस्वरूपं प्रमाणान्तरगम्यमपि केवलवैदिकव्यवहारानुपाति तथा स्वरुरपीति* ।

ननु रथन्तरादयो गीतिविशेषाः प्रत्यक्षसिद्धाः नत्वेवं स्व- रुः । न ह्यसौ काष्ठमात्रमत आह–'यद्यप्यत्र प्रातिपदिकमात्रा- त्'(४) झटिति 'न ज्ञायते तथाऽपि पूर्वपदोत्तरपदवाक्यान्तरैः शक्योऽवधारयितुम्'(५)। पूर्वपदे तावत् तृतीयाविभक्त्या करणभू- तं किमपीति गम्यते, उत्तरपदे चाञ्जनश्रवणादञ्जनकरणमिति । वा- क्यान्तरे च युपस्य स्वरु करोतीति श्रूयत इति । 'यथा लोके' (६)काष्ठैः पचतीति व्युत्पन्नाविभक्त्यर्थो व्युत्पन्नाख्यातार्थश्चाव्यु- त्पन्नकाष्ठार्थोऽपि पाककरणवाचित्वं काष्ठशब्दस्य व्युत्पद्यत इति । 'अवघृते चाञ्जनकार्ये'(७) स्वरौ 'अर्थाद्युत्पत्तिर्भविष्य- ति'(८) उपादानमित्यर्थः । अञ्जनं कार्यं यस्य स तथोक्तः । 'सा यत् स्वरुं करोतीत्यनूद्यते'(९) ।

पूर्वपक्षमनुभाषते–'स्वरुं करोतीत्युपश्लेषलक्षणया'(१०) प्र-

(१-१०) टु० टी० पृ० २० ।

त्यासत्तिलक्षणया 'श्रुत्या स्वरोः कर्त्तव्यतेति'(१)-

'उच्यते । त्वत्पक्षे सुतरां श्रुतिबाधः'(२) । कथम् । 'शब्दस्य धर्मो अर्थः'(३) । शब्दं प्रति प्रधानमित्यर्थः । 'शब्दोऽपि क्रमस्य'(४) प्रत्यासत्तिलक्षणस्य 'धर्मो'(५) । तत्र 'शब्दधर्मं क्रममनुजिघृक्षता तस्य शब्दस्य धर्मो बाध्यते'(६) । यूपशब्दस्य श्रुत्यर्थत्यागात् । 'स एवोऽङ्गाङ्गेन'(७) अर्थाङ्गस्य शब्दस्य योगं क्रमस्तेन 'प्रधानभूतार्थबाधः'(८) । स चायुक्तः । 'तस्माद्यूपशब्दस्य लक्षणाभयादितरा वचनव्यक्तिर्यत्स्वरुं करोति तत् यूपस्येति'(९) ।

ननु चात्रापि करोतिरादानलक्षणार्थः स्याचत्कोऽत्र विशेषः। अयं विशेषो मुख्यो यूपशब्दो जघन्यश्च करोतिशब्द इति । वाक्यार्थविधानं च समानमेव । न हि यूपशब्दस्य पूर्वपक्षेऽपि विध्यनन्तर्भावस्तल्लक्षितजोषणादिविशिष्टस्वरुकर्त्तव्यताविधानात् । विशिष्टविधिश्च गरीयान् विशेषणविधानादतोऽपि यूपसम्बन्धमात्रविधानमिति । 'अनेनाभिप्रायेणाह'(१०)भाष्यकारः— 'श्रुतिरपि बाध्यते वाक्यमपीति(११)'। श्रुतिबाधे हि श्रुत्यर्थैकवाक्यतापि बाधिता भवतीति ।

व्याख्यानान्तरं तु विस्तरोक्तस्य संक्षेपमात्रार्थं कृतं भाष्यकारेणेति न व्याख्यायते ।

---

(१-११) टु० टी० पृ० २० ।

२ शाखाया आहार्यताधिकरणम् ।

## शाखायां तत्प्रधानत्वात् ॥ ७ ॥

प्राचीदिक् किं शाखाप्रयुक्ता उत तदाहरणप्रयुक्तेति । किं विहारापेक्षया प्राचीं दिशं प्रति शाखाया आहरणं कर्तव्यं उत वृक्षस्य या शाखा प्राची सा हर्त्तव्येति । तत्र श्रुत्या दिगभिधानात् सैवाहरणाङ्गतया विधीयत इति प्राप्त आह–'प्राची तावद् दिगाहर्तुमशक्या' । प्राचीशब्दार्थो हि द्वितीयासंयोगात् आहर्त्तव्यतया प्रतीयते न च दिगाहर्तुं शक्यते । अतो न दिग्वाद इति ।

अथ शक्यत्वात्प्राचीं दिशं प्रत्याहरतीतिकल्प्येत द्विकर्म्मको ह्याहरतिस्तत्रस्य प्रथमकर्म्म शाखा तया तु व्याप्यमाना दिक् प्राची द्वितीयं कर्म्म भविष्यतीति । 'तथाऽपि वाक्ये आह्रियमाणस्याश्रवणात् साकांक्षं वाक्यं'(१) स्यात् । 'प्रतिशब्दश्चाश्रुतोऽध्याहर्तव्यः'(२) स्यादाह्रियमाणेन व्याप्तिमवगमयितुमसति हि तस्मिन्नाहर्त्तव्यतया प्राचीशब्दार्थः प्रतीयेतेति देशलक्षणा च स्यात् । न हि दिशं प्रति किं चिदानीयते तच द्वयमप्ययुक्तम् ।

अथो'च्येत-प्राक् देश आहरतीति द्वितीयास्थाने सप्तमी'(३) कल्प्यते तथा सति हि प्रतिशब्दो नाध्याहर्त्तव्यः स्यादिति ।

उत्तरमेवं सत्यप्यश्रुतो देशोऽनीप्सितश्च'(४) परिगृहीतः स्यात् । ततश्च दिगभिधायिनः प्रातिपदिकस्य विभक्तेश्चेप्सितत-

---

( १-२ ) टु० टी० पृ० २० । ( ३-४) टु० टी० पृ० २०-२१ ।

मवान्निर्णा लक्षणार्थः स्यात् । (१)आहर्त्तव्यस्य चानिर्देशात्तु साकांक्षत्वं(२) तदवस्थमेव ।।(३)तस्मादियमपि देशविदिकल्पना दुःश्लिष्टैव । इतरश्च दिग्वादो देशवादो वेत्याह-'प्राक्शब्दोऽयं सम्बन्धिशब्दत्वादवधिमपेक्षते(४) कस्य प्राचीमिति । न चावधिनिर्दिश्यते । न च विहारदेशोऽवधिरिति युक्तमश्रुतत्वादप्रकृतत्वाच्च । अतो दिग्वादे साकांक्षता अवधेरनिर्देशात्साकांक्षत्वमिति दोषः । देशवादे तु लक्षणा । आहर्त्तव्यस्यानिर्देशात् साकांक्षत्वं पूर्वोक्तश्च दोष इति । तस्मात्प्राचीमित्यनेन यदीप्सितं तदुच्यते(५)' । द्वितीयासंयोगात् '(६)तच्च' प्राचीपदं '(७)हरतेः कर्म्म पूर्वप्रकृतां शाखां शक्नोति वदितुम्'(८) । पूर्ववाक्ये हि हरतिकर्म्मतया शाखा प्रकृता प्राचीमाहरतीत्यनेनापि हरतिकर्म्मैव विशेष्यते । 'तस्मात्प्राचीं शाखामाहरतीति(९)' वाक्यार्थः । एवं हि 'कस्य' (१०)प्राचीं(११) वृक्षस्येत्येतावन्मात्रमपेक्षणीयं, न किञ्चिदन्यत् । अवधिरपि वृक्षः सुलभ एव । शाखाशब्दो हि वृक्षावयववाची वृक्षं मपेक्ष्य प्रवर्त्तते । प्राचीशब्दोऽपि तां विशेष्टुं तदपेक्ष एव प्रवर्त्तत इति सुशोभनम् । 'तस्मात् शाखावादः । (१२)प्रकृतां वा शाखां लक्षयेत् । दिशो वाऽनीप्सितत्वाद्विहारदेशमीप्सिततमयुक्त(१३)'मिति

---

(१) अत्र मुद्रितपुस्तके 'अनिर्देशात्तु' इत्यस्य स्थाने 'अनीप्सितत्वात्' इति पाठो दृश्यते । ... १२ टुप्टी० पृ० २०-२१ ।

(७) अत्र मुद्रितपुस्तके 'आहरतेः' इति पाठोऽस्ति ।

(१३) शबर० पृ० ४७२; टुप्टी० पृ० २१ ।

अत्र शबरभाष्ये 'ईप्सिततममयुक्तम्' इति टुप्टीकायान्तु 'ईप्सिततमयुक्तम्' इति पाठोऽस्ति ।

भाष्यमनुभाष्य व्याचष्टे-'दिशोऽनीप्सितत्वादित्ययं हेतुः। यस्माद्दिगनीप्सिता तस्माद्विहारदेशं वा लक्षयेच्छाखां(१)' वा दिशो वा। अनीप्सितत्वादित्यत्र वाशब्दो विहारदेशमित्यस्यानन्तरं द्रष्टव्यः। यदि दिशोऽनीप्सितत्वादाहरणकर्मत्वानुपपत्तेरवश्यं शाखा वा दिशो वा लक्षयितव्यस्तत्र शाखालक्षणैव ज्यायसीति॥

३ छेदनस्य शाखाप्रयुक्तताधिकरणम्।

( सिद्धान्तसूत्रम् )

## शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद्वैषम्यं(२) तत्॥ ८॥

अग्रं मूलं चोभयमपि प्रयोजनवत्। उभयं च शाखाशब्देनोच्यते। सहैव वृक्षाद्विच्छिद्याह्रियते परिवासने। न च विभज्यते। तस्मादुभयप्रयुक्तं छेदनादीतिपूर्वपक्षः।

सिद्धान्तमाह-'उभयमपि(३)' न प्रयोजक(४)'मग्रं मूलं च' किं त्वग्रमेव। 'कथं? मूलतः शाखां परिवास्योपवेषं करोतीति परिवासयतेः प्रधानभूता शाखा द्वितीयासंयोगादतो मूलाधिकरणं छेदनं शाखार्थम्(५)'।

अयमर्थः। यदि परिवासनमात्रमिह श्रूयेत ततः शाखाशब्देन समूलमग्रं निर्दिश्य द्वितीयया परिवासनमुभयार्थं विनियुज्येत।

---

( १-५ ) तु० टी० पृ० २१।

( २ ) अत्र लेखमुद्रितटुप्टीकापुस्तके 'वैषम्यात्'इति पाठोऽस्ति।

मूलाधिकरणकन्तु परिवासनमत्र श्रूयते। न च मूलस्य मूलतः परिवासनं सम्भवतीत्यग्रपर एवायं शाखाशब्दो मूलविशिष्टं छेदनमग्रार्थं करोति। एवं च मूलस्याप्यग्रार्थमेव वृक्षादाच्छेदनमाहरणं च। न ह्यनाहृते मूले मूलतः परिवासनमग्रस्य सम्भवति। तेन छेदनमाहरणं मूलं तदधिकरणं च परिवासनं सर्वमग्रार्थमेव। मूलं स्वग्रप्रयुक्तछेदनानुनिष्पन्नं यूपशकलमिवाञ्जनार्थं कपालोपधानार्थमुपादीयत इत्यप्रयोजकमिति।

ननूपवेषस्यापि द्वितीयानिर्देशः समस्त्येवेति कथं परिवासनस्य तादर्थ्यं न भवतीत्यत आह—'उपवेषमिति या द्वितीया सा करोतेः न परिवासयतेः। तस्मान्नोपवेषार्थं छेदनम्। आह—उपवेषे करोतेः कर्मतया प्रतीयमाने(१)' भाव्यमाने 'इतरत्(२)' मूल'मुपवेषं निवर्त्तयति(३)' करोति कर्मणो ह्युपवेषस्य भाव्यमानत्वात् करणाकाङ्क्षायां प्रकृतमूलं करणत्वेन सम्बध्यते। 'कथमितिच्छेदनादिकेतिकर्त्तव्यता गृह्यते(४)'। यथा स्वरुं करोतीति पूर्वपक्षे' जोपणादीनां प्रकृतानां ग्रहणमुक्तं न च तद्वत् निराकरणं भवतीत्याह—(५)'तत्र कारणान्तरेण' यूपशब्दस्य लक्षणाप्रसङ्गेन 'स्वरोर्भावनां प्रतिपिस्स्योपादानार्थः करोतिरित्युक्तमिह(६) तत्कारणं नास्ति'। येनोपवेषभावना निषिध्येत। '(७)तस्मादुभयं प्रयोजकम्'—

'उच्यते। स्ववाक्योधारितेन यूपशब्देन येतिकर्त्तव्यता लक्ष्यते(८) सा वाक्येनैव स्वरुसम्बन्धिनी'त्येवं पूर्वपक्षस्तत्रया-

(१-८) तु० टी० पृ० २१।

ङ्क्तिः। इह स्ववाक्ये नास्ति यूपस्थानीयपदं यदितिकर्तव्यता लक्षयेत्।

नन्वत्रापि शाखापदमस्ति तेन लक्षिताशाखासम्बन्धि-नीतिकर्त्तव्यताविनियनेनोपवेषार्थे स्यादित्याह—'मूलतः शाखां परिवास्येति समीपमिदं वाक्यमुपवेषं करोतीत्यपि समाप्तम्(१)'।

ननु परिवास्येत्यनाख्यातं कथं वाक्यान्तरमत आह—'मूला-धिकरणेन छेदनेन शाखां निष्पाद्यान्यदपि क्रियान्तरं करो-तीत्येतावत्(२) गम्यते। तेनैते भिन्ने वाक्ये' पूर्ववाक्ये 'मूला-धिकरणं छेदनं वाक्येन शाखार्थम्'(३)। यद्यपि पूर्वं क्त्वान्तत्वात् क्रियान्तरमपेक्षत इति कृत्वा न वाक्यभेदो मुख्यस्तथाऽपि क्रिया-द्वयं तावत् स्वकारकविशिष्टं प्रतिपाद्यत इति वाक्यभेदाभिधानं तत्र परिवासनसम्बन्धितया मुख्यमेव स्वार्थमभिदधत् शाखा-पदं न लक्षणयेतिकर्त्तव्यतामुपवेषकरणार्थतया प्रतिपादयतीति शाखार्थमेव तत् छेदनम्। 'उपवेषस्य(२)' तु 'स्ववाक्ये छेद-ना(४)दिकाया' '(५)इतिकर्त्तव्यताया अश्रवणात्(६)'। यदि परं (७)प्रकृता स्यात्, तद्यायुक्तमित्याह—'तत्र शाखाया वाक्येनोपवेषस्य(८) प्रकरणेन प्रकरणं च दुर्बलं वाक्या'दि-त्यतोभिप्रायादाह भाष्यकारः—'उभयसम्बन्धे विरोधः, विरो-

(१-८) तु० टी० पृ० २२।

(६) अत्र मुद्रितटुप्टीकाग्रन्थे 'अश्रवणा'दित्यस्य स्थाने 'श्रव-णादि'त्येव पाठः।

धे च वाक्यं प्रकरणाद्‌बलीयः(१)

अथ सन्निहितेन स्यादिभाष्यार्थमाह—अथान्येन प्रयु(२)-
क्तं मूले ग्रहीष्यते उपवेषं करोतीति किमग्रार्थपरिवासनानुनि-
ष्पन्नं यदिदं मूलं तदिति । तथा सति परकीयत्वादप्रयोज-
कं(३) पदपांसुवत् । अथात्र व्यवहितकल्पनया वाक्येनैव परि-
वासनस्योपवेषार्थत्वं सिद्ध्यतीति चोदयति—शाखां परिवास्य मू-
(४)लादुपवेषः अग्रं वत्सापाकरणार्थं परिवासनमात्रमत्र विधीय-
ते, न मूलाधिकरणम्। मूलतः शब्दस्तूपवेषं करोतीत्यनेन सम्ब-
ध्यते। तेन मूलाग्रयोरुभयोरपि द्वितीयान्तशाखाशब्दनिर्दिष्टयोरङ्गं
परिवासनमिति—

दूषयति—एतदपि न घटते । व्यवहितकल्पनयाऽश्रुतवा-
क्यकरणमवैदिकं स्यादतो वाक्यसामर्थ्यात् शाखार्थमेव छेद-
न(५)मग्रार्थमित्यर्थः । अग्रस्य हि मूलतः परिवासनं भ-
वति न मूलस्येति । शाखाशब्देनाग्रस्यैवाभिधानात् तदर्थमेव
परिवासनमित्याह—'शाखाशब्दश्च यावदच्छिन्ना तावत्समूलायां
वर्त्तते । छिन्ना चेदग्रे वर्त्तते मूलादपैति(६)' । तेन परिवासनाद्-
र्ध्वमग्र एव शाखाव्यवहारात्तदर्थमेव परिवासनम्। मूलयुक्तायां
स्तु परिवासनेन शाखात्वनाशात्तादर्थ्यमनुपपन्नं परिवासनस्य ।
तस्माच्छाखाप्रयुक्तं छेदनम्(७)' । 'अथापि मूले शाखाशब्दो

(१-२) शबर० पृ० ४५४, टु० टी० पृ० २१ ।
(३-७) टु० टी० पृ० २२ ।

भवे(१)'दित्यादिभाष्यार्थमाह—'शाखाप्रयुक्तं चाग्नींर्थेनानीतं च(२)'। 'यद्यपि मूलं शाखाशब्देनोच्यते(३) तथाऽपि मूलपरिवासनेन संस्कृता शाखा कार्ययोग्या न तु मूले शाखा भवति(४)'। शाखाकार्ययोग्यं न भवतीत्यर्थः। कुत इत्यपेक्षायां भाष्यं पठति—'अमूलपरिवासितत्वात्(५)'। तद्याचष्टे—'मूले अच्छिन्नत्वादित्यर्थः(६)'। मूलतः परिवासनं हि शाखासंस्कारः शाखाकार्याणामङ्गम्। न च मूलतः परिवासनं मूलस्य सम्भवति। अत आह सूत्रकारः—

## श्रुत्यपायाच्च ॥ ९ ॥

'शाखाश्रुतिः(७)' शाखाशब्दः छिन्नायां सत्यां 'मूलादपैतीत्यर्थः(८)'। 'तस्माच्छाखाकार्येषु(९) न मूलं ग्रहीतव्यम्'। अमूलपरिवासितत्वात्। यच्चैवंभूतं तदर्थं परिवासनम्। तस्मादग्रार्थं परिवासनम्। तत् प्रयुक्तमितिसिद्धम्।

---

(१) अयं ग्रन्थो मुद्रितशाबरभाष्ये नोपलभ्यते।
(२) एष ग्रन्थो मुद्रितटुप्टीकाग्रन्थे नोपलभ्यते।
(३) टु० टी० पृ० २२।
(४) अत्र मुद्रितपुस्तके 'न तन्मूल'मिति पाठः।
(५) एष ग्रन्थो मुद्रितभाष्ये नोपलभ्यते।
(६-८) टु० टी० पृ० २२-२३।
(९) अत्र मुद्रितपुस्तके 'शाखाकार्येषु' इत्यस्य स्थाने 'शाखा· ·' इति पाठो दृश्यते।

## ४. शाखाप्रहरणस्य प्रतिपत्तिकर्मताधिकरणम् ।

### ( पूर्वपक्षसूत्रम् )

## हरणे तु जुहोतिर्योगसामान्यात् द्रव्याणां चार्थशेषत्वात् ॥ १० ॥

यदुक्तं पौर्णमास्यां शाखानोत्पाद्येति तन्न यद्यप्युपवेषार्था नोत्पाद्या तथाऽपि प्रस्तरप्रहरणार्थमुत्पादनीयैव। तदपि हि शाखायाः प्रयोजकमेव। सह शाखया प्रस्तरं प्रहरतीति तदङ्गत्वेन विधानादित्येवं पूर्वाधिकरणप्रयोजनाक्षेपेण वान्तरसम्बन्धः ।

ननु प्रस्तरस्य यार्जि प्रति गुणभावे सत्यपि प्रहरणं प्रति प्राधान्यात् सहभावेन प्रस्तरतुल्यत्वावगमात् तद्वदेव शाखापि प्रतिपाद्यैव कथमेकान्ततोऽस्या गुणभाव इत्याशंक्याह–'त्रिप्रकारः सहभावः । एकस्तावत्(१)'प्रकारः 'उभावपि प्रधानभूतौ'(२) । यथा–देवदत्तो यज्ञदत्तेन सह पूजयितव्य इति द्वावपि पूजनं प्रति प्रधानभूतौ । 'अपरः(३)' प्रकारो द्वावपि गुणभूतौ' । यथा–देवदत्तेन सह यज्ञदत्तः शिविकां वहतीति। 'अन्यः(४)'प्रकार 'एकः प्रधानभूतः(५) इतरो गुणभूत इति' । यथा–ऋत्विग्भिः सह यजमानः क्रतुं करोतीति। तेनेहापि सहभावे सत्यपि प्रस्तरस्य प्राधान्यं शाखायाश्च गुणत्वं नानुपपन्नमिति । तत्र प्रहरतेर्यागात्मकत्वात् शाखायास्तत्र गुणभाव एव युक्तः । प्रहरणमात्ररूपत्वे हि

( १–३ ) तु० टी० पृ० २२–२३ ।
( ४–५ ) तु० टी० पृ० २३

तस्य प्रहिप्रमाणप्रस्तरप्रधानत्वेऽपि तत्तुल्यत्वेन शाखाया अपि प्रतिपाद्यत्वं स्यादिति तदर्थं यजतिरयमिति, प्रतिपादयति–'सूक्तवाकेन प्रस्तरं(१) प्रहरतीति' प्रस्तरप्रहरणे विनियुक्तः सूक्तवाकेन(२) प्रस्तरं प्रकाशयति, नापि प्रहरणक्रियाम् । यद्यपि यदनेन हविषा शास्त (इति) सन्निहिताभिधायि पदं प्रस्तरमभिधत्ते तथाऽपि न सकलस्य तत्प्रकाशकत्वमस्तीति । भवितव्यं च तस्याऽवश्यमुच्चारयितव्यो मन्त्रः(३)' । सकलस्य प्रस्तरस्य सम्बन्धिनो वा 'प्रकाशकत्वेनोपकरोति(४)' । न चानेन क्रिया वा प्रसिद्धा तत्सम्बन्धी वा प्रस्तरः प्रकाश्यत इत्युक्तम् । 'तस्माद्यदनेन प्रकाश्यते तत् क्रियया सम्बध्यते । तेन चायुरादीनि फलानि प्रकाश्यन्ते । इष्टाश्च देवताः । अत आयुरादीनि फलान्यस्याः क्रियायाः । अग्न्यादयश्च देवताः । न च द्रव्योद्देशमन्तरेण देवता भवन्ति, न चायुरादीनि यागमन्तरेण फलानि भवन्ति'(५) । न हि प्रहरणमात्रस्य संस्कारकर्मणः फलवत्त्वो युक्तः । यस्मान्न द्रव्योद्देशमन्तरेण देवतान्वयः, 'तस्मात्प्रस्तरः प्रतिपाद्यमानोऽपि(६) द्रव्यतां प्रतिपद्यते,' उत्तरार्धवत् । यस्मादग्न्यादयो देवताः प्रस्तरश्च द्रव्यमायुरादीनि च फलानि, 'तस्मात् द्रव्यदेवतासम्बन्धेन यजिधातुरनुमीयते फलवान् । हरतिस्तु(७) श्रुतोऽप्यविवक्षितो निर्वपतिवत्' । एवं प्रहरतिर्यज-

---

(१-७) तु० टी० पृ० २३ ।

(५) अस्य न्यायस्य व्याख्या प्रथमपादस्थटिप्पण्यां द्रष्टव्या ।

तिरितिसिद्धे पूर्वपक्षमाह—'इह' (१)यागे 'सहभावे(२)' शाखा-प्रस्तरयोः 'श्रुते यत्तृतीयानिर्दिष्टं(३)' शाखाद्रव्यं 'तत्साधक-तमत्वेनैव सम्बध्यते । प्रमाणान्तरेण प्राधान्यस्यानवगमात् । (४)यस्य हि प्रमाणान्तरेण' यागं प्रति 'प्राधान्यमवगतं त-दि(५)'ह तृतीयान्तमपि 'क्रियां (६)निर्वर्त्तयदात्मार्थमेव निर्व-र्त्तयतीति' शक्यं वक्तुम् ।

तदा हि—यथा शाखा प्रह्रियते तथा सह प्रस्तरमपि प्रहरेदि-तिप्राधान्यापरित्यागेन तृतीया व्याख्यातु शक्यते। अप्राप्ते तु प्रा-धान्ये तदनुपपत्तेरेवं वचनं व्याकर्त्तव्यं यत् प्रस्तरं प्रहरन्तीति प्रस्तरसाधनक यागमुद्दिश्य तत्सहशाखयेतिशाखासाहित्यं तद-ङ्गत्वेन विधीयते । शाखया सह प्रस्तरेण यजेतेति । ततश्च सह-योगे विहितयाऽपि तृतीयया क्रियाङ्गत्वमेवोपदिश्यत इति साध-कतमत्वेनैव तृतीयान्तं सम्बध्यत इति युक्तम्। नत्वियं करणे तृ-तीया सहशब्दश्रवणात् ।

अन्ये तु सहशब्दाविवक्षया करणतृतीयामेव पूर्वपक्षे व-र्णयन्ति ।

ननु सहभावात् द्वयोस्तुल्यत्वावगमात् कथमेकस्य प्राधा-न्यमितरस्य गुणत्वमत आह—'क्रियानिर्वृत्तौ च (७)सहभा-व उपपद्यते' । उपात्तक्रियाविषयं हि साहित्यं यजिश्चात्र प्रहरति-नोपात्तस्तेन प्रहरणं प्रति प्रस्तरस्य प्रधानस्यापि यजिक्रिया-

( १-७ ) द्रु० टी० पृ० २३

निर्वर्चकत्वमस्त्येवेति तेनांशेन साहित्यमिति ।

ननु किमत्र तृतीयोपन्यासेन ? विभक्त्यन्तरेऽपि हि भूतभव्य न्यायेनैव(१) शाखायाः प्रहरणाङ्गत्वं सेत्स्यतीत्यत आह–'यदि तृतीया न श्रूयेत'(२) किं तु विभक्त्यन्तरं प्रस्तरेण सह शाखां प्रह रतीति । ततःसहभावो नास्तीति 'यागं निष्पादयंत्यपि'(३) शाखा 'प्रतिपद्य(४)र्या स्या'त्प्रतिपाद्या स्या'त्प्रस्तरवत्'(५)। प्रस्तरस्य हि द्वितीयासंयोगाद्यागांशे गुणभूतस्यापि प्रहरणांशं प्रति प्राधा न्यमस्ति तद्वत् । 'अत(६)आह' भाष्यकारः–(७)'सह योगे यत्र तृतीया, तस्य गुणभावो, यत्र द्वितीया तस्य प्राधान्य''मिति कृता- र्था सती'(८) शाखा 'प्रतिपाद्यत इति(९) चेत्'–न खल्वेकस्या नेकगुणभाव उचित इति । उत्तरं तत्र । कुतः–'दर्शपूर्णमास- यो'(१०)रुभयोः 'प्रकरणे श्रवणात्,'(११) उभयांगमिदं सह शा- खया प्रस्तरं प्रहरतीति । ततः किमत आह—'पौर्णमास्यां न(१२)प्रतिपत्तिः', शाखायास्तत्राकृतार्थत्वात्, गुणभावस्तूभ यत्रापि संभवतीति । 'प्रस्तरस्तूभयत्रापि कृतार्थ'(१३)स्तेन

(१) अस्य न्यायस्य व्याख्या प्रथमपादस्थटिप्पण्यां द्रष्टव्या ।

(२) टु० टी० पृ० २२

(३-६) टु० टी० पृ० २२-२३।

(७) शाबर० पृ० ४५४, टु० टी० पृ० २३।

(८-१३) टु० टी० पृ० २३-२४।

तस्य प्रतिपत्तिः, न त्वेवं शाखाया इति। एतच्चातिशयार्थमुक्तम्। कृतार्थाया अपि बलेन गुणभाव उपपादित एव । 'तस्मा(१)-यत्र तृतीया' शाखायां 'साऽत्यन्तसाधनभूता । न चैकत्रा'-(२)मावास्यायां 'प्रधानभूताऽपरत्र'(३) पौर्णमास्यां 'गुण-भूते'(४)'ति युक्तं 'विवक्षाभेदात्'(५) वैरूप्यापत्तेः । 'तस्माद्गुणभूतैव शाखा'(६) ।

( सिद्धान्तसूत्रम् )

## प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वात् ॥११॥

'हरतौ यद्युभावपि तुल्यौ ततः(७) सहभाव उपपद्यते' । यद्यपि सूक्तवाकेन प्रस्तरं प्रहतीत्यत्र प्रहरतिर्यजातिरभिहितस्त-थापि सह शाखया प्रस्तरं प्रहरतीत्यत्र प्रहरणमात्रं श्रूयते । तेन तदेव प्रति तुल्यत्वं सहभावेन प्रतीयते । 'प्रस्तरस्य च तत्र प्रतिपत्तिरतः शाखाया अपि'(८) प्रतिपत्तिरेव । यदि प्रतिप-त्तिस्तर्हि सह शाखया प्रस्तरं प्रहरतीति किमुच्यते शाखां प्रहर-तीत्येवोच्यतामत आह-'तत्रानियतकाले प्रहरणे प्राप्ते सह प्रहर-तीति विधीयते'(९)।शाखां प्रहरतीत्येतावता ह्यनियतकालं प्रहरणं प्राप्नोतीति प्रस्तरकाले प्रहर्तुं सह प्रहरतीति विधीयते। 'एवं(१०)' सति वेदिविरेचनार्थं प्रतिपत्ते'रपेक्षितत्वान्नादृष्टकल्पना कृता'(११) भवति । प्रहरणांगत्वे त्वदृष्टं कल्प्येत । न हि प्रहरणे शा-

(१-८) टु० टी० पृ० २३-२४
(९-११) टु० टी० पृ० २४ ।

खायाः सूक्ष्ममपि किं चिददृष्टमस्ति । यदि तु प्रस्तरप्रहरणकाले शाखाप्रहरणं विधीयते र्नाहं प्रस्तरेण सह शाखां प्रहरतीति स्यात् । न तु सह शाखया प्रस्तरं प्रहरतीति तत्राह–'अतो न विवक्षिता तृतीया'(१) । यदा हि सहशब्दात् दृष्टार्थत्वाच्च प्रतिप्रत्तिरितिस्थितं तदार्थादविवक्षिता तृतीया । 'तस्मादन्या(२) द्वितीया लक्ष्यते' । प्रस्तरमित्यपि 'द्वितीया तृतीया लक्षणार्थेवे' (३)त्याह —'प्रह्रियमाणयोश्च यन्निर्ज्ञातकालं तदितरस्या'(४)निर्ज्ञातकालस्य 'काल प्रयच्छद्वस्तुतो गुणभूतं'(५) । कथं पुनस्तदितरस्य कालं प्रयच्छतीत्याह—'क्रियायास्तुल्यत्वात्'(६) । तुल्य क्रियायोगिनोर्हि य एकस्य कालः स एवेतरस्यापि भवतीति । 'प्रस्तरश्चात्र निज्ञातकाल'(७)स्तेनासौ शाखायाः कालप्रदानेन गुणभूत इति तत्रापि तृतीया द्रष्टव्या । तेनायमर्थः—प्रस्तरेण सह शाखां प्रहरतीति एवं प्रतिपत्तिरवसाधनेन पर्यवसितेऽधिकरणे प्रतिपाद्यापि शाखा प्रस्तरवद्यागे गुणभूता उत नेति जिज्ञासायामाह—'अनयोश्च प्रहरण(८) एव साहित्यं नानुमिते यागे' । कुतः (९)'शाखायास्तत्राश्रवणात्' । न हि यागे शाखा श्रूयते । न च शाखाप्रहरणस्य सूक्तवाकोऽग यतो मंत्रवर्णाद्देवताप्राप्तिः स्यात् ।

ननु प्रत्यक्षमेव सूक्तवाकमुच्चार्य प्रस्तरवत् शाखाऽपि प्रह्रियते तत्कथमसौ न यागसाधनमत आह—'प्रत्यक्षेण

( १–६ ) दु० टी० पृ० २४

( २ ) अत्र मुद्रितपुस्तके 'अनया' इति पाठ ।

प्रदीयमानेऽपि प्रदाने'(१) क्रियमाणेऽपि 'यथा' मैत्रावरुणे'(२) ग्रहे पयसा मैत्रावरुण श्रीणातीति विहिते संस्कारे मिश्रीभूत 'पयः प्रसक्तेण हूयमानमपि न यागसाधनं'(३) शक्यं हि सह प्रक्षिप्यमाणयोरप्येकवर्ज्जमितरदेवतायै मनसा संकल्पयितुम् । 'एवं शाखा प्रहरतिना सम्बध्यमानाऽपि(४) नैव यागस्य साधिकेतिसिद्धम्' ।

## ५-निनयनस्य प्रतिपत्तिकर्मताधिकरणम् ।

( पूर्वपक्षसूत्रम् )

### उत्पत्त्यसंयोगात्प्रणीतानामाज्यवद्विभागः(५) स्यात् ॥१४॥

'शुद्धाः'(६) केन चिदपि प्रयोजनेनासंयुक्ताः 'प्रणीता उत्पन्नाः । कैमर्थ्याभिलाविण्यो (७)वाक्यद्वयेन'प्रणीताभिर्हवींषि संयौति। अन्तर्वेदिप्रणीतानि नयतीतिचानेन 'संयवननिनयने प्रयोजने प्रति नीयन्ते'(८) । तेनोभयार्थत्वा(९)'दुभयप्रयुक्ता इति' ॥

'ननु संयवने तृतीयानिर्देशात् गुणभावः' (१०)प्रणीतानामत-

( १ ) लेखपुस्तके 'प्रदाने' इति पाठो नास्ति ।

( २-१० ) टु० टी० पृ० २४ ।

( ५ ) मुद्रितटुप्टीकाग्रन्थे 'विभाग'स्थाने 'विकार' इति पाठः ।

( ८ ) अत्र 'न तूभयप्रयुक्ता' इत्यधिकः पाठः पाठशालीयपुस्तके । 'प्रयोजने' इति पाठो लेखपुस्तके न दृश्यते ।

स्तदेव प्रयोजकम् 'निनयने तु द्वितीयानिर्देशात् प्राधान्य'(१) मासां न च गुणेन प्रधानं प्रत्येतुं शक्यमित्यप्रयोजकं निनयनम्- 'उच्यते। वचनान्तरेणा'न्यत्र 'शेषभावे'(२) पूर्वं'प्रवगते'(३) सति पश्चाद'न्यत्र संयोगे सति भवति प्रतिपत्तिः'(४)। तत्र हि द्रव्यं कृतार्थं भवति 'यथा स्विष्टकृत्'(५)। तत्र हि सकलस्य पुरोडाशद्रव्यस्याग्नेययागार्थस्य सतः पश्चात् स्विष्टकृता संयोगः कृतार्थस्य भवतीतियुक्ता प्रतिपत्तिः। तथा च प्रतिपत्तिलक्षणं करिष्यते—उत्पत्तौ येन संयुक्तं तद् तदर्थं श्रुतिहेतुत्वात् तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिः स्यादिति। इह तूत्पत्तौ प्रयोजनासंयुक्तानां परस्परानपेक्षेण वाक्यद्वयेन नोभयत्र विनियोगान्नैकत्रापि कृतार्थसंयोग इति न प्रतिपत्तिः। किं च केवलं 'संयवनार्थानां च तावतीनामेव ग्रहणं (६)प्राप्नोति, यावतीभिः संयवनं निष्पाद्यते, कुतोऽन्यत्र प्रसङ्गः'। तेन केवलसंयवनार्थत्वे तत्रैव क्षीणानां न नियमेन प्रतिपत्तिः संभवतीति 'उभयप्रयुक्ताभिः(७) उभयं निर्वर्तनीयम्'। तत्र युक्तमधिकानां ग्रहणम्। तस्मादुभयप्रयुक्ता इति।

ननु'स्पर्श्यसंयोगादाज्यवद्विभाग'(८) इति सूत्राद् ध्रौवस्यैवाज्यस्य प्रणीतानां सर्वार्थत्वप्रतिज्ञानं गम्यते तत्कथमुभयार्थत्वमुच्यतेऽत आह—'सर्वार्था इति पक्षो न(९), कुतः,

( १-९ ) टु० टी० पृ० २४।
( ७ ) अत्रलेखपुस्तके'उभयप्रयुक्तासु तूभयं निर्वर्त्य'मिति पाठः।
( ८ ) मी० सू० १४।

निष्प्रमाणकत्वात्' । तत्र प्रमाणस्याभावात् ।

ननु प्रमाणं प्रकरणं स्यादत आह—'श्रुतवाक्येना'(१)पां 'सम्बन्धे विशेषं प्रत्यवगते सति प्रकरणादश्रुतं(२) सर्वाङ्गत्वं कल्प्यम्'—तच्चायुक्तम् ।

किं च 'कल्प्यमानेऽपि'(३) प्रकरणात् सर्वार्थत्वे संयवननिनयनयोरपि 'प्रकरणसम्बन्धात्तत्र(४) चान्यत्र च प्राप्ताः' प्रणीताः 'पुनः'(५) संयवननिनयनयो'र्वचना'(६) दन्येभ्यः 'परिसंख्यायेरन् । तस्मात्सर्वार्थपक्षो दुश्लिष्टः'(७) ।

( सिद्धान्तसूत्रम् )

## संयवनार्थानां वा प्रतिपत्तिरितरासां तत्प्रधानत्वात्॥१५॥

'तृतीयासामर्थ्यात्संयवनार्थतैव'(८) । निनयनं तु द्वितीयाश्रुत्या तासां संयवनेन कृतार्थानां प्रतिपत्तिः ।

यत्तु परस्परानपेक्षत्वात् वाक्ययोर्नैकसंयुक्तानामितरसंयोग इति तदयुक्तम् । निनयनं तावत् द्वितीयाश्रुतिसामर्थ्यादपां संस्कारकमेवावगम्यते । तच्च यदि कथं चिदप्यपां प्राधान्यं सवतुवस्न संभवति ततोऽन्यथा क्रियेत । संभवति तु

(१-२) अत्र लेखपुस्तके 'श्रुतवाक्येनापां सम्बन्धेऽवगते प्रकरणादश्रुतमंगत्वं कल्प्य'मित्यं पाठो दृश्यते ।

(३-७) टु० टी० पृ० २४ ।

(८) टु० टी० पृ० २५ ।

तासां संयवनोपयोगित्वात् संस्कार्यत्वमिति श्रुत्यंवगतसंस्कार्यत्वसिध्यर्थं संयवनसम्बद्धानां निनयनमिति गम्यते । उत्पत्तौ येन संयुक्तमित्यत्र तु प्रतिपत्तिलक्षणे प्रदर्शनार्थमुत्पत्तिग्रहणमन्यत्र कृतार्थानामन्यत्र गमनं प्रतिपत्तिरित्यर्थः ।

यत्तु तावतीनामेव ग्रहणं प्राप्नोतीत्युक्तं तत्राह—'न च तावन्मात्रं शक्यमुपकल्पयितुं, सूक्ष्ममिदं द्रव्यमवश्यमतिरिच्यते । तस्मादतिरिक्तस्य प्रतिपत्तिः । न त्वतिरेचयितव्यमितिशास्त्रमस्ति'(१) । यदि ह्यतिरिक्तोत्पत्तिः शास्त्रीया स्यात्ततः प्रतिपत्त्यर्थं द्रव्यं नोत्पादयितव्यमिति निनयनमर्थकर्म स्यात् । न त्वेतदस्ति ।

नतु यदि तावन्मात्रमुपकल्पयितुं न शक्यं तथा सत्यल्पं गृह्यतां किमित्यतिरिक्तं गृह्यतेऽत आह—'अतिरेकश्चावश्यम्भावी'(२) । कुतः 'अल्पे हि गृह्यमाणे संयवनस्याकृतत्वात् पुनः प्रणीतानां संस्कारः कर्त्तव्य इति गौरवमापद्येत' । पात्रासादनानन्तरं विहितस्य संस्कारस्य संयवनकालेऽनुष्ठानात्क्रमभ्रेषाच्च प्रायश्चित्तं'(३) प्रसज्येत । तस्मादधिकानां ग्रहणात् संयवने कृतेऽवशिष्टानां निनयनं प्रतिपत्तिरिति सिद्धं न प्रयोजकत्वम् ।

ये तु प्रयोजनत्वाविशेषेऽपि दृष्टादृष्टयोर्दृष्टमेव प्रयोजकं संगिरन्ते तेषां संयवनस्य हविरुत्पादकत्वेन दृष्टार्थत्वात्तस्यैव प्रणीताप्रयोजकत्वम् । निनयनस्य त्वर्थकर्मत्वेऽप्यदृष्टार्थत्वाच्च

( १-२ ) टु० टी० पृ० २५ ।

( ३ ) अत्र लेखपुस्तके 'क्रमान्यत्वे च प्रायश्चित्त'मिति पाठः ।

प्रणीताप्रयोजकत्वं प्रसज्यत इति व्यर्थं प्रतिपत्तित्वसाधनमि-
त्यनारभ्यमिदमधिकरणं स्यादिति।

६ दण्डदानस्यार्थकर्मताधिकरणम्।

पूर्वपक्षसूत्रम्।

प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात्॥१६॥

अत्राधिकरणे प्रयोजकाप्रयोजकत्वं विचार्यते। अधिकरणा-
न्तरे तु कृष्णविषाणायामपि। सोमलिप्तप्रभृतिषु तु प्रागातिथ्या
बर्हिर्विचारान्न प्रयोजकाप्रयोजकत्वं विचार्यते। यद्यपि नियम
विधिव्युत्पादने फलतः प्रयोजकाप्रयोजकत्वमस्ति तथाऽपि
सोमलिप्तादिषु बहुषु नास्तीत्याशंक्य सर्वेषां संगतिमाह—'दा-
नस्य मैत्रावरुणः प्रयोजकः'(१)। कृष्णविषाणाया तु न प्रासनं
प्रयोजकम्। 'कृष्णविषाणा चात्वाले प्रतिपादयन्'(२) इत्युक्ते 'प्र-
तिपत्तिप्रसंगेनोपरितनी चिंता'(३)। किं सोमलिप्तानामव-
भृथगमनं प्रतिपत्तिरुतार्थकर्मेति।

नन्वत्र प्रयोजकाप्रयोजकत्वमेव संभवति। अर्थक-
र्मत्वे प्रयोजकं प्रतिपत्तित्वे तु नेति तद् किमितिप्रासंगिकी
संगतिरुच्यते—

तदुच्यते—नात्र प्रयुक्तिविचारः सम्भवति। अर्थकर्मत्वेऽपि हि
'यत्किं चिद् सोमलिप्तं तेनावभृथमभ्यवयन्ती'त्यर्थाभिधानक-

(१-३) तु० टी० पृ० २५।

र्म्मत्वात्तुपोपवापवदप्रयोजकमेवावभृथं सोमलिप्तानां तद्धारणं तु भूतसंयोगाश्रयणात् प्रयुज्येत । तत्तु प्रतिपत्त्यापि प्रयुज्यत एवेत्युक्तम् । अतः प्रासंगिक्येव सङ्गतिः । तत्र प्रतिपत्तिरिति वदता 'देशार्थावभृथश्रुति(१)'रित्युक्ते 'देशसम्बन्धात्' देशप्रसङ्गाद्'न्योऽपि देशः(२)' समादिर्शनामि 'विपरिवर्त्तमान(३)'स्तत्समानन्यायश्च कालः कर्त्ता च चिन्त्यते किमनूद्यते नियम्यते इति नियमप्रसङ्गेन तयोत्तरे (४)अधिकरणे अवतरतो गुणसंस्कारयोरपि नियम एवेति' । संस्कारप्रसङ्गेन च यागादिनिरूपणमित्याह–'करणद्रव्य संस्कुर्व(५)'दवघातादि'तेन' करणेन 'सम्बध्यते' तस्य करणस्य 'रूपं नाख्यायते(६), कीदृशेन व्यापारेण करणमनुष्ठितं भवति' यस्य द्रव्यमवघातादिना संस्क्रियते । 'इत्यनेन प्रसङ्गेन यागनिरूपणमापातम् । एवं जुहोतावपि(७)' । अपि शब्दाद्ददातावपि ।

एवं सङ्गतिमुक्त्वा प्रस्तुतमधिकरणं व्याख्यायते । तत्र द्वितीयासंयोगाद्यजमानधारणेन च दण्डस्य कृतार्थत्वात् प्रतिपत्तिरेव मैत्रावरुणाय दानमिति पूर्वपक्षः स्पष्टः ।

( सिद्धान्तसूत्रम् )

## अर्थकर्म्म वा कर्त्तृसंयोगात्स्रग्वत् ॥ १७ ॥

---

( १-५ ) टु० टी० पृ० २५ ।

( ६ ) अत्र मुद्रितपुस्तके 'रूपमाख्यायते' इत्येव पाठोऽस्ति ।

( ७ ) टु० टी० पृ० २५

'दण्डो व्याप्यमानः क्रियया शब्देनैव मैत्रावरुणार्थ उपदिश्यते(१)'। सम्प्रदानविभक्त्या मैत्रावरुणस्य ददातिक्रियाकर्मणा दण्डेनाभिप्रेयमाणस्य तमपि प्रति प्राधान्यावगमात्।

ननु द्वितीयासंयोगात् दण्डार्थमेव दानं स्यादत आह— 'या च द्वितीया दण्डमिति, साऽपि न प्राधान्येनेप्सितार्था, किं तर्हि व्याप्यमानतया(२)'। कुतः ? 'मैत्रावरुणो हि तत्र प्रधानभूतः(३)'। न हि द्वितीयायास्तादर्थ्यमर्थः। किं तर्हि साध्यतामात्रं तत्र साध्यान्तराभावे तदेव परं साध्यं शेषि स्यादिह तु मैत्रावरुणस्य प्राधान्यमवगम्यते इति व्याप्यतामात्रमेव दण्डस्य न प्राधान्यं, अत आह भाष्यकारः–'तथायुक्तं चानीप्सितमिति द्वितीया भविष्यतीति(४)'। सक्तुष्वऽपि तर्हि किमित्यनीप्सितार्थद्वितीयैव नोक्ता किमिति तत्र विभक्तिव्यत्यय इत्युक्तम्। तथायुक्तत्वाभावादिति चेत्–कथमभावः। यावता जुहोतेस्त्यागविशिष्टप्रक्षेपार्थत्वे तदुपाधिकत्यागाभिधायित्वे वा प्रक्षिप्यमाणानां त्यज्यमानाना वा सक्तूनामस्त्येव तथायुक्तता। तस्माच्छब्दशक्तिवैचित्र्यमेवात्रोत्तरम्। यथा क्रियावाचित्वाविशेषेऽपि चलतिगच्छत्योश्चलतिः कर्मनिष्ठत्वेन क्रियानभिधानादकर्मकः। गच्छतिस्तु तन्निष्ठक्रियामभिदधत् सकर्मकः तथा जुहोतिस्त्यागप्रक्षेपवाच्यपि कर्मनिष्ठतया क्रिया नाभिधत्त इत्यकर्मकः।

---

(१-३) टु० टी० पृ० २५।

(४) शबर० पृ० ७३६, टु०टी०पृ० २९। पाणिनीयसूत्रम् १-४-५

ततश्च भवतूनां कर्मकारकत्वेन सम्बन्धायोगात् तृतीयार्थे द्विती येत्युक्तम्। यच्छतिस्तु सकर्मक इति दण्डस्यानीप्सितकर्मत्वमभि- हितमित्यनवद्यम्। उपसंहरति–'तस्मान्न दण्डः प्रधानभूतः(१)'।

नतु प्रतिपत्तित्वे दृष्टार्थता स्यात्, मैत्रावरुणार्थत्वे त्वदृ- ष्टार्थं दण्डदानं स्यादत आह—'न च दण्डदानमदृष्टाय, तमो- वगाहनादिषु दृष्टायैव(२)'। कर्म्म कुर्वाणस्य हि रात्रिप्रचारादिषु तमोवगाहनात् सर्पादिनिवारणात्। स्थित्वा च प्रैषादि ब्रुवाणस्या- ऽऽलम्बनत्वाद्दण्डेन महान्मैत्रावरुणस्योपकारः क्रियते। तस्मात् दण्डस्य मैत्रावरुणः प्रयोजक इत्यग्नीषोमीयविकारेषु निरूढप- शुषु दीक्षाभावेऽपि मैत्रावरुणार्थं दण्डधारणं कर्त्तव्यम्। अत्र न दण्डधारणप्रयोजकत्वं मैत्रावरुणस्योच्यते। प्रतिपत्त्यापि तद् प्रयुक्तत्वविशेषादिति तत्र तत्रोक्तमेव। अतो दण्डस्यैव प्रयोज- कतया चार्थे समवैषम्यमित्यत्र भाष्यकारेणोक्तं दण्डस्य मैत्रा- वरुणः प्रयोजक इति।

## कर्म्मयुक्ते च दर्शनात् ॥ १८ ॥

'दण्डी प्रैषानन्वाहेति अनूद्यते(३)' दण्डित्वं, अतः 'तेन प्रचरतो '(४)दण्डधारिं दर्शयति। प्रतिपत्तित्वे न तस्य धारणं

(१) द्र० टी० पृ० २५।

(२-३) द्र० टी० पृ० २५–२६।

(४) अत्र 'दण्डं दर्शयति यदि प्रतिपत्तिर्न तस्य धारणम्भवेत्' इति लेखपुस्तकपाठः।

(४) अत्र मुद्रितपुस्तके 'दण्डं दर्शयति' इत्येव पाठः।

भवेत्', दानमात्रेण कर्त्तव्यस्य कृतत्वात्। 'अथार्थकर्म ततो ध्रियमाणस्य(१)'दण्डस्यानुवाददर्शनमुपपद्यते इति परेण सम्बन्धः। कुतस्तस्य ध्रियमाणत्वमित्याशंक्याह–'प्रकरणाविशेषात् यद्यत्क्रियते(२)' मैत्रावरुणेन 'तत्त(३)'त्सर्वं 'दण्डसंयुक्ते न(४)' कर्त्तव्यमिति हेतोः। 'तस्मात्सर्वत्र दण्डभावादनुवाददर्शनमुपपद्यते(५)'।

'नन्वरुणाधिकरणे दण्डविधानमुक्तमुपसर्जनार्थो विधीयत(६)' इत्यनेन भाष्येण तत्कथमिह दण्डानुवादोऽभिधीयते। पूर्वापरविरोधो ह्येवं स्यादिति–

'उच्यते–प्रकरणात्सर्वार्थं(७)' दण्डित्वं 'प्राप्तं प्रैषानुवचनयोर्निर्दिश्यते(८)' उपसंह्रियत इत्यर्थः। 'एवं(९)' सति 'नास्ति(१०)' पूर्वापर'विरोध(११)'स्तदेव व्यनक्ति–'दण्डानुवादोऽपि घटते(१२)' प्रकरणात् प्राप्ते'र्नियमविधाना(१३)'त्तदु'पसर्जनार्थविधानमप्य(१४)'रुणाधिकरणोक्तं घटते एव।

उपसंहार एवान्यनिवृत्तिसाम्यान्नियम इत्युक्तम्। न ह्यत्र प्रकरणादनियमेन प्रैषानुवचनयोरन्यत्र च दण्डः प्राप्नोति यतो नियम्येत। किं तु प्रकरणादविशेषेण प्राप्यमाणो वचनेन विशेष

(१–५) टु० टी० पृ० २६।

(६) अरुणाधिकरणे भाष्ये पृ० २१९–२२४ द्रष्टव्यम्।

(७–१४) टु० टी० पृ० २६।

उपसंह्रियते। यथा पुरोडाशं चतुर्धाकरोतीत्यनेन। तत्सिद्धं मैत्रावरुणः प्रयोजक इति।

पूर्वाधिकरणे आशङ्कानिरासः।

७-प्रासनस्य प्रतिपत्तिकर्मताधिकरणम्।

## (१)उत्पत्तौ येन संयुक्तं तदर्थं तत्, श्रुतिहेतुत्वात् तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिः स्यात् ॥१९॥

अधिकरणान्तरं वा युक्तं प्रणीतानां संयवनैककार्यत्वात्तस्मिन्निर्वृत्ते कृतार्थत्वान्निनयनं प्रतिपत्तिरिति। इह तु क्रत्वन्तःपाति सकलं कण्डूयनं कृष्णविषाणया कार्यमविशेषादतः सर्वसमाप्तेः प्रागकृतार्था विषाणा न प्रतिपत्त्यर्हा। अतः चात्वाले प्रासनं न प्रतिपत्तिः किंत्वर्थकर्मातः प्रयोजकं प्रासनं कृष्णविषाणाया इति प्राप्तेऽभिधीयते-द्वितीयासंयोगात् प्रतिपत्तिरेव। कृतार्थत्वं तु प्रागपि। कण्डूयनसद्भावात्। पश्चादपि संभवतीति चेत्-को दोषः। न तु तस्य विषाणांगं प्रतिपत्तिविधानात् द्वितीयाश्रुत्या च सिद्धं प्रतिपत्तित्वं प्रासनस्य। तस्मात् न प्रयोजकं प्रासनमिति सिद्धम्।

अथवोत्पत्तौ येन संयुक्तं तत्तदर्थं श्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिः स्यादितिसूत्रे प्रतिपत्तिमात्रगतन्यायाभिधानात् तन्मात्रमत्रोदाहरणम्। तथा च प्रथमसूत्रेऽभिहित-

(१) सूत्रमेतद्‌टुप्टीकाकारैर्न व्याख्यातम्।

पिंडाप्राशित्रचतुर्धाकरणसंयुवाककालभक्ष्यरूपशेषकार्याणामुत्पत्तौ येन संयुक्तमिसनेन प्रतिपत्तित्वस्य स्थितत्वादिति । अनेन हि सर्वशेषकार्याणां प्रतिपत्तित्वमिहत्यमिति दर्शितम् ।

ननु तृतीय एवैषां प्रतिपत्तित्वं सिद्धमप्रयोजकत्वादेकस्मात् क्रियेरन् सर्वेभ्यो वा कारणविशेषादिति–न । तत्र सर्वप्रदानाधिकरणप्रयोजनमात्रकथनात् । तत्र कार्योपयोगित्वात् संस्कार्यस्य कृतकार्यस्य न संस्कारार्हता तस्मात्सर्वाः प्रतिपत्तयोऽर्थकर्मेति—

अत्राभिधीयते—कृतकार्येऽपि द्रव्येऽस्त्येव प्रतिपत्तिविशेषापेक्षा किमिदं देशान्तरं नेयमुतोपेक्ष्यमुत यथेष्टमुपयोज्यमिति तत्र प्राशनभक्षणादिप्रतिपत्तिविशेषनियमविधिर्युक्त एवान्यथानपेक्षितविधानप्रसंगात् । न चानुपयोगित्वं प्रतिपत्तिबलादेव कृतस्यापि कार्यस्य तल्लोपे विपत्तिः कल्प्यते । तस्मादेवंजातीयकं प्रतिपत्तिकर्मेति सिद्धम् ।

८ अवभृथगमनस्य प्रतिपत्तिकर्मताधिकरणम् ।

( सिद्धान्तसूत्रम् )

(१)सौमिके च कृतार्थत्वात् ॥ २० ॥

( पूर्वपक्षसूत्रम् )

(२)अर्थकर्म वाऽभिधानसंयोगात ॥२१॥

---

( १-२ ) सूत्रद्वयमेतद्टुप्टीकाकारैर्न व्याख्यातम् ।

अवभृथशब्देन प्रकृतस्य कर्म्मणः श्रुत्याभिधानादेशलक्षणायाश्चान्याय्यत्वात्तस्य चार्थकर्म्मत्वेन सिद्धस्य संस्कारकर्म्मत्वानुपपत्तेर्द्वितीयया च प्राधान्यावगमात् कृतार्थानां सोमलिप्तानां तृतीयाश्रुत्याऽवभृथं प्रति गुणत्वमेव युक्तमिति ।

( उत्तरपक्षसूत्रम् )

## प्रतिपत्तिर्वा तन्न्यायत्वात् देशार्थाऽवभृथश्रुतिः ॥२२॥

'तेनावभृथं यन्तीत्यनेन सोमलिप्तावभृथयोः सम्बन्धः'(१) पूर्वपक्षे 'विधीयते । तत्र सोमलिप्तं वावभृथार्थमवभृथो वा सोमलिप्तार्थो द्वयमप्येतत् न घटते'(२)। कथम्? 'यदि'(३) तावत् 'साधनत्वेन सोमलिप्त'(४)मवभृथार्थं 'तत्र'(५)पक्षे वारुणेनैककपालेनावभृथं यंतीत्यु'त्पत्तिवाक्यशिष्टैककपालेन बाध्यते । अथ सोमलिप्तं संस्कर्त्तव्यमवभृथः संस्कारकस्तथाऽपि यागं (६)निर्वर्त्तयत् द्रव्यं संस्कार्यतां प्रतिपद्यते' । संस्कार्यस्यापि निर्वर्त्तकत्वमवश्यंभावीति । ततः किमत आह—'निर्वर्त्तनचैवार्था चैककपाल'(७)स्तद्धित'श्रुतिप्राप्तो विद्यत एव'(८) । तेनार्थातुल्यार्थतया सोमलिप्तानां बाधः ।

'किंचा'(९)परपरः संस्कार्यत्वपक्षे दोषः—'पुरोडाशेन क्रियमाणो'(१०)ऽवभृथो 'निर्वर्त्यत्वात् प्रधानभूतः । सोमलिप्तं तु'(११) प्रधानं 'संस्कुर्वाणे'(१२)ऽवभृथो 'गुणभूतः। न चैकस्य कर्म्मणो गुणत्वप्राधान्ये युक्ते'(१३) नैकस्य संस्कारकर्म्मत्वप-

( १-१३ ) तु० टी० पृ० २६

# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS

Edited by

GOPINATH KAVIRAJ, M A

No 1—The Kiranavali Bhaskara a Commentary on Udayana's Kiranavali, Dravya section, by Padmanabha Misra
Ed with Introduction and Index by Gopinath Kaviraj M A. Rs 1-12

No 2—The Advaita Chintamani, by Rangoji Bhatta,
Ed with Introduction etc by Narayana Sastri Khiste Sāhityacharya Rs 1-12

No 3—The Vedanta Kalpalatika by Madhusudana Sarasvati
Edited with Introduction etc by Rāmajna Pandeya Vyākaranacharya Rs 1-12

No 4—The Kusumanjali Bodhani, a Commentary on Udayana's Theistic Tract, Nyaya Kusumanjali, by Varadaraja
Ed with Introduction etc by Gopinath Kaviraj, M A, Rs 2-0

No 5—The Rasasara a Commentray on Udayana's Kiranavali, Guna Section by Bhatta Vadindra
Ed with Introduction etc by Gopinath Kaviraj M A Rs 1-2

No 6—(*Part I*)—*The Bhavana Viveka* by *Mandana Miśra*, with a Commentary by *Bhatta Umbeka*
Ed with Introduction etc by M M Gaṅgānatha Jha, M. A, D Litt Rs 0-12

No 6—(Part II)—Ditto Ditto Rs 0-12

No 7—(Part I)—The Yoginīhṛdaya dīpikā, by Amṛtānanda Natha, being a Commentary on Yoginīhṛdaya, a part of Vamakeśvara Tantra
Ed with Introduction etc by Gopinath Kaviraj, M A. Rs. 1-8

No 7—( Part II ) Ditto Ditto Rs 1-4

No 8—The Kāvyadakini, by Gangananda Kavindra
Ed with Introduction etc by Jagnnātha Sāstri Hoshing Sāhityopādhyaya Rs 0-10

No. 9—(Part I)-The Bhakti Chandrika, a Commentary on Sāṇḍilya's Bhaktisutras, by Narayana Tirtha
Ed with a Prefatory Note by Gopinath Kaviraj, M A
Rs 0-15

No 10-(Part I)-The Siddhāntaratna, by Baladeva Vidyabhuṣana
Ed with a Prefatory Note by Gopinath Kaviraj M A
Rs 1-2

No 10-(Part II)—Do Do Rs 2-12

No 11-The S ri Vidyā Ratna Sutras, by Gaudapāda, with a Commentary by S aṅkararanya
Ed with Introduction etc by Narayana Sāstrī Khiste Sahityacharya Rs 0-9

No 12-The Rasapradipa, by Prabhakara Bhatta
Ed with Introduction etc by Narayana S astri Khiste Sahityacharya Rs 1-2

No 13-The Siddhasiddhanta Sangraha by Balabhadra.
Ed with Introduction by Gopinath Kaviraj, M A Rs 0-14

No 14-The Trivenikā, by Āśadhara Bhatta
Ed with Introduction by Batukanātha Sarmā Sāhityopadhyāya, M. A. and Jagannātha S astri Hoshing Sāhityopādhyaya Rs 0-14

No 15-(Part I)-The Tripurārahasya. (Jñāna Khanda)
Ed with a Prefatory Note by Gopinath Kaviraj M.A.
Rs 0-14

No 15-( Part-II )—Do. Do Rs 2-4

No 15-( Part III )—Do. Do Rs 2-0

No 16-The Kāvya Vilāsa by Chiranjiva Bhaṭṭāchārya
Ed with Introduction etc by Batukanātha Sarmā Sāhityopādhyāya, M A and Jagannātha Sāstri Hosing Sāhityopādhyāya Rs 1-2

No 17-The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed with Introduction by M M Gaṅgānātha Jhā, M A, D Litt Rs 0-14

No 18-(Part I)-The Gorakṣa Siddhanta Sangraha
Ed with a Prefatory Note by Gopinath Kaviraj, M A. Rs, 0-14

No 19-( Part I )-The Prākṛta Prakāśa by Vararuchi with the Prākṛita Sañjivani by Vasantarāja and the Subodhinī by Sadānanda
Ed with Prefatory note etc by Batuk Nath Sarmā, M A and Baladeva Upādhyāya, M A
Rs 2-4

No 19-( Part II ) Ditto Ditto Rs 2-12

No 19—( Part III ) Introduction etc ( In Preparation )

No 20-The Mansatattvaviveka by Viśvanatha Nyayapañchānana Bhattācharya
Edited with Introduction etc by P Jagannatha Sastri Hoshing Sāhityopādhyaya, with a Foreword by Pandit Gopi Nath Kaviraja, M A, Principal, Government Sanskrit College, Benares Rs 0 12

No 21-( Part I ) The Nyāya Siddhanta Mala by Jayarama Nyaya Pañchanana Bhattācharya,
Edited with Introduction etc by Mangal Deva Sāstrī M A, D Phil ( Oxon ), Librarian Govt Sanskrit Library, Sarasvati Bhavana Benares
Rs 1-2

No 21-( Part-II ) Ditto Ditto Rs 2 0

No 22-The Dharmanubandhi Slokachaturdaśi by Sri Seṣa Kṛṣna with a Commentary by Rāma Pandit
Edited with Introduction etc by Nārayana Sastri Khiste Sāhityacharya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana Benares

No 23-Navarātrapradipa by Nanda Pandit Dharmadhikarī
Ed with Introduction etc by Vaijanatha Sastrī Varakale, Dharmaśastra-Sastrī Sadholal Research Scholar, Sanskrit College, Benares, with a Foreword by P Gopinath Kaviraj, M A, Principal, Government Sanskrit College Benares

No 24–The S rī Rāmatāpinīyopanisad with the Commentary called Rāma Kāśikā in Purvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana
Ed with Introduction etc by Anantarama S āstrī Vetala Sāhityopādhyāya, Post-Acharya Scholar, Govt Sanskrit *College, Benares*, with a Foreword by Pandit *Gopī Natha* Kaviraja, M A., Principal, *Government Sanskrit College*, Benares Rs 3–12

No 25–The Sapindyakalpalatika by Sadāśivadeva alias Āpadeva with a commentary by Narāyana Deva
Edited with Introduction etc by Jagannatha S āstrī Hośinga, *Sāhityopādhyāya*, *Sadholal Research Scholar, Govt Sanskrit* College, Benares Rs 1–4

No 26–The Mrgankalekha Nātika by Viśvanātha Deva Kavi
Edited with Introduction etc by Narāyana Sastri Khiste Sāhityāchārya, Asst Librarian, Government Sanskrit Library, Benares Rs 1–0

No 27–The Vidvachcharita Panchakam By Narāyana S āstri Khiste, Sahityacharya, Assistant Librarian, Govt Sanskrit College, Library, *Sarasvati Bhavana, Benares* *With an Introduction* by Gopināth Kaviraja, M A, Principal, Govt Sanskrit College, Benares Rs 2–0

No, 28–The Vrata Kos'a by Jagannātha S āstri Hosinga Sāhityopādhyaya, late Sadholal Research Scholar, Sanskrit College, Benares *With a Foreword by S rī Gopinātha Kaviraja*, M A., Principal, Govt Sanskrit College, Benares Rs 4–0

No 29–The Vritti dīpika By Mauni S ri Krsna Bhatta
Edited with Introduction etc by Pt Gangadhara Sastri Bharadvaja Professor Govt Sanskrit College Benares

No, 30–The Padārtha Mandanam By S rī Venīdatta
Edited with Introduction etc by Pandit Gopāla S'āstri Nene Professor, Govt Sanskrit College, Benares

No 31 ( Part I)–The Tantraratna by Partha Sarathi Misra,
*Edited by* M M Dr Ganganatha Jha, M A., D Litt, Vice-Chancellor, Allahabad University, Allahabad.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M A

Vol I—

(a) Studies in Hindu Law (1) its Evolution, by Ganganātha Jha

(b) The View-point of Nyaya Vaiśesika Philosophy, by Gopinath Kaviraj

(c) Nirmana Kāya, by Gopinath Kaviraj — Rs 1-12

Vol II—

(a) Paraśurama Misra alias Vāṇi Rasala Raya, by Gopinath Kaviraj

(b) *Index to Sabaras Bhasya, by the late Col G A Jacob*

(c) Studies in Hindu Law (2)—its sources by Ganganath Jha

(d) A New Bhakti Sutra, by Gopinath Kaviraj

(e) The System of Chakras according to Goraksa natha, by Gopinath Kaviraj

(f) Theism in Ancient India by Gopinath Kaviraj

(g) Hindu Poetics, by *Batuka natha Sarma*

(h) A Seventeenth Century Astrolabe by Padmakara Dvivedi

(i) Some aspects of Vira Saiva Philosophy by Gopinath Kaviraj

(j) Nyaya *Kusumañjali (English Translation)*, by Gopinath Kaviraj

(k) The Definition of Poetry, by Narayana Sastri Khiste

(l) Sondala Upadhyaya, by Gopinath Kaviraj — *Rs 5*

Vol III—

(a) Index to Sabara's Bhasya *by the late Col G A Jacob*

(b) Studies in Hindu Law (3) Judicial Procedure by Ganganatha Jha

(c) Theism in Ancient India, by Gopinath Kaviraj

(d) History and Bibliography of Nyaya Vaiśesika Literature, by Gopinath Kaviraj

Vol IV—

(a) *Studies in Hindu* Law (4) Judicial Procedure by Ganganatha Jha

(b) History and Bibliography of Nyaya Vaiśesika Literature, by Gopinath Kaviraj

(c) Analysis of the Contents of the Rgveda-Pratiśakhya, by Kangala Deva Sastri

(d) Nārāyana s Ganita kaumudi, by Padmakara Dvivedi

(e) Food and Drink in the Ramayanic Age, by Manmatha natha Roy

(f) Satkaryavāda Causality in Sankhya, by Gopinath Kaviraj

(g) Discipline by Consequences, by G L Sinha

(h) History of the origin and expansion of the Aryans by A C Ganguly

(i) Punishments in Ancient Indian Schools by G L Sinha Rs 5

Vol V—

(a) Ancient Home of the Aryans and their migration to India, by A C Ganguly

(b) A Satrap Coin, by Shyamalal Mehr

(c) An Estimate of the Civilisation of the Vanaras as depicted in the Ramayana, by Manmatha natha Roy

(d) A Comparison of the Contents of the Rgveda Vajasaneya Taittirīya & *Atharvaveda Prātiśakhyas* by *Mangala Deva Sastri*

(e) *Formal Training* and the Ancient Indian Thought, by G L Sinha

(f) History and Bibliography of Nyaya Vais esika Literature, by Gopinath Kavirāj

(g) A Descriptive *Index to the names in the Ramayana by Kanmatha nāth Roy*

(h) Notes and Queries, (1) Virgin Worship, by Gopinath Kaviraj Rs 5

Vol VI—

(a) Index to S abara's Bhāsya by the late Col G A Jacob

(b) Some Aspects of the History and Doctrines of the Nāthas, by Gopinath Kaviraj

(c) An Index etc the Ramayana by Manmatha nātha *Roy*

(d) Studies in Hindu Law by M M *Ganganatha Jha*

(e) The Mimamsa *manuscripts* in the Govt Sanskrit Library (*Benares*) by Gopināth Kavirāj

(f) Notes and Queries, by Gopinatha Kavirāj

Vol VII

(a) Bhamaha and his Kavyalankara, by Batukanatha Sarma and Baladeva Upadhyaya

(b) Some variants in the readings of the Vaisesika Sutras, by Gopinatha Kaviraj

(c) History and Bibliography of Nyâya Vaisesika Literature, by Gopinatha Kaviraj

(d) An *attempt to arrive at the Correct meaning of some* obscure Vedic words by Sitaram Joshi

(e) A comparison of the contents of the Rig Veda Vajasaneya, Taittiriya, and Atharva Veda (Chaturadhyayika) Prâtisakhyas by Mangal Deva Shastri

(f) An Index to the Ramayana by Manmatha Nath Roy

(g) An Index to Sabaras *Bhasya*, by *the late* Col J A Jacob

(h) Gleanings from the Tantras, by Gopinatha Kaviraj

(i) The date of Madhusudana Saraswati, by Gopinatha Kaviraj

(j) Descriptive notes on Sanskrit Manuscripts by Gopinatha Kaviraj

(k) A note on the meaning of the term of Parardha, by Umesa Misra

Vol VIII (In Progress)

To be had of
The Superintendent
Government Press, U. P.
Allahabad

THE

PRINCESS OF WALES

# SARASWATI BHAVANA TEXTS

No. 51

(PART I)



---

THE

# TANTRARATNAM

(PART I)

---

GOVERNMENT SANSKRIT LIBRARY

BENARES